॥ श्रीः ॥

# ॥ श्रीमद्यमकभारतम् ॥

श्रीमद्यादुपत्यव्याख्यानसहितम् ।

## रा. सुदर्शनशर्मणा, 'साहित्यशिरोमणिना'

यथामति संशोध्य,

" श्रीगोपालविलास " मुद्रणालये

मुद्रापयित्वा, प्रकाशितम् । सन् १९३३.



Edited and Published

BY

**R. SUDARSANA SARMA,**

" Sahitya Siromani "

Printed at the " Sri Gopala Vilasa " Press,

Kumbakonam.



Price Rs. 1-4-0. ) 1933. ( Postage Extra.

॥ श्रीः ॥

# ॥ श्रीमद्यमकभारतम् ॥

श्रीमद्यादुपत्यव्याख्यानसहितम् ।

रा. सुदर्शनशर्मणा, 'साहित्यशिरोमणिना'

यथामति संशोध्य,

" श्रीगोपालविलास " मुद्रणालये

मुद्रापयित्वा, प्रकाशितम् । सन् १९३३.



Edited and Published

BY

**R. SUDARSANA SARMA,**

" Sahitya Siromani "

Printed at the " Sri Gopala Vilasa " Press,

Kumbakonam.



Price Rs. 1-4-0. ) 1933. ( Postage Extra.

# PREFACE.

It is well known that Sri Madhvacharya (Anandatirtha) has written 37-Works of rare and outstanding philosophical merit. In order to exhibit his proficiency in recondite technique,Sri Madhvacharya composed his"YAMAKA BHARATAM" a work devoted to an epitome of Mahabharata, employing the technique of "YAMAKA" (Repetition of Same letters and words to convey different meaning). The circumstances of the composition of 'Yamaka-Bharatam' are stated in the Acharya's biography-"Madhva-Vijaya" by Narayanapandithacharya. A religious reading or reciting of this work which contains 81 stanzas, is believed to be spiritutally as efficacious as reading of the entire "MAHABHARATA."

On account of the repetition of terms and letters in the technique of "YAMAKA", a clear understanding of the import of the work is impossible without the help of a commentary. After a strenuous search, the commentary on this work, by Yadavacharya the famous commentator on Jayatirtha's "Nyayasudha" was secured and compared with some available manuscripts, and the text of the "YAMAKA-BHARATA" has now been printed and published FOR THE FIRST TIME with the commentary of Yadavacharya and with extracts from another commentary by Vedavyasacharya of Raghoottamapura. Students and admirers of Sanskrit literature in general and followers of Madhvacharya in particular, as well as heads of colleges (Government and private.) and libraries are requested to patronise the present research-work by purchasing one or more copies of the publication.

R. SUDARSANA SARMA. (*Sahitya Siromani.*)

॥ श्रीरस्तु ॥

# ॥ भूमिका ॥

---

अभ्रमं भङ्गरहितमजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यरु ३७. ग्रंथगळन्न रचिशिदरु. अवु-गळल्लि तम्म चित्रकवन सामर्थ्य प्रकटनक्कागि '**श्रीमद्यमकभारत**' ग्रन्थवन्न माडिदरु. ईविषयवु "भगवांश्चित्रकवितां लौकिकीं दर्शयन्किल । गोप्यं भारतसङ्क्षेपमकृथा विश्वविस्मयं " यन्त त्रिविक्रमपण्डिताचार्यरु श्रीमदाचार्यरल्लि विज्ञापनामाडिद्दागि श्रीसुमध्वविजय १९ ने-सर्गदल्लि उक्तवागि अदे. ईग्रन्थदपारायणवु संपूर्णमहाभारतपारायणफलप्रदवु ईग्रन्थवु यमकरूपवादप्रयुक्त व्याख्यानविल्लदे इदर अर्थज्ञानवागलारदेंत तोरि श्रीमन्न्यायसुधाप्रभृतिग्रन्थगळ व्याख्यानकर्तृगळाद श्रीयादवाचार्यरिंदकृत व्याख्यानसह अनेकप्रतिगळसहायदिंद यथामति शोधनमाडि अल्यल्लि रघू-त्तमपुरवासि वेदव्यासाचार्यकृत व्याख्यानस्थ विशेषांशगळन्नू शेरिशि श्लोकानुवाद पदच्छेदसह मुद्रणमाडिद्धेवे. एतावत्पर्यंत ईग्रन्थ सव्या-ख्यानवागि अमुद्रितवादप्रयुक्त इदरन्न श्रीमदाचार्यरल्लि भक्तिउळ्ळवरु, तथा राजकीयपाठशालाधिकारिगळु, पुस्तकशालाधिकारिगळु, स्वीकरिशि नम्म प्रयत्नवन्न सफलमाडबेकागि प्रार्थिसुथेवे. इत्थं विधेयः,

रा. सुदर्शनशर्मा, साहित्यशिरोमणिः.

श्रीलक्ष्मीहयग्रीवाय नमः ।

# ॥ श्रीमद्यमकभारतम् ॥

## श्रीमद्यादुपत्यव्याख्यानसहितम् ।

ध्यायेत्तं परमानंदं यन्माता पतिमयदपरमानन्दं ॥
उज्झितपरमानं दंपत्याद्याद्याश्रमैस्सदैव परमानंदं ॥१॥

(पदच्छेदः) ध्यायेत् । तं । परमानंदं । यत् । माता । पतिं । अयत् । अपरमा । आनंदं । उज्झितपरमानं । दंपत्याद्याद्याश्रमैः । सदा । एव । परमानंदं ॥१॥

श्रीमुखांभोजहंसाय संसारभयसेतवे । सोमवंशावताराय नमः कंसाद्यसद्विदे ॥१॥ व्यासं भारतकर्तारं मध्वं मूलकृतं तथा । चेतोवाग्देवतां वाणीं गुरूंश्च प्रणमाम्यहं ॥२॥ अथ योगीशवेदेशशिक्षाशाणनिशातधीः । करिष्ये मंदबोधाय टीकां यमकभारते ॥३॥ यद्यपि श्लोकरूपास्ति टीकाऽस्य सुगमा न सा । अतस्तामनुसृत्यैव टीकेयं क्रियते मया ॥ ४ ॥

इह सकलसुजनानां प्रत्यहं पठनेन भारतपठनजनितफलसिद्ध्यर्थं संक्षेपतो भारतार्थप्रतिपादकं काव्यं करिष्यन्भगवानानंदतीर्थमुनिः स्वस्यांतरायविधुरतया ग्रंथादौ हरिध्यानरूपं मंगळं अवश्यं कर्तव्यमिति सुजनं शिक्षयति ध्यायेदिति । अत्र सुधीरितिकर्तृवाचिपदं विष्णुमिति कर्मवाचिविशेष्यपदं चाध्याहार्यं । तमिति तच्छब्दात् यमितिसिद्ध्यति । ततश्च सुधीः परमः आनंदो यस्यस तथोक्तः तं विष्णुं ध्यायेदिति क्रियाकारकसंबंधः । कुतोऽस्य परमानंदत्वमित्यत उक्तं यन्मातेति । यत् यस्मात् । माता जगन्माता रमा । पतिं स्वस्वामिनं विष्णुं । आनन्दं । उद्दिश्येतिशेषः । अयत् प्राप । तस्मात्परमानंदत्वमितिसंबंधः । ननु आनंदमुद्दिश्य रमया प्राप्तत्वेऽपि तस्य कुतः परमानंदत्वमित्यतो रमां विशिनष्टि अपरमेति । अः विष्णुः

परमः यस्मास्सा अपरमा । ब्रह्माद्युत्तमेत्यर्थः । ततश्च ब्रह्माद्युत्तमापि रमा स्वानंदमुद्दिश्य यं प्राप्नोति स परमानंदइतिसिद्ध्यत्येवेति भावः । ननु कामादिवैरिकलुषिते मनसि श्रवणादिना ज्ञानमेव नसंभवति । अतः कथं ध्यायेदिति ध्यानविधिरित्याशङ्कायां स्वस्वाश्रमविहितनिवृत्तकर्माभिः परिहृत कामादिवैरिणां प्रसन्नोविष्णुरेव ध्यानोपयुक्तं ज्ञानं ददातीत्याशयेनाह उज्झितेत्यादिना । दंपतीशब्देन गृहस्थाश्रमो लक्ष्यते । एवंच तस्य आद्यः ब्रह्मचर्याश्रमः दंपत्याद्यएव आद्यो येषांते दंपत्याद्याद्याः तेच ते आश्रमाश्च तैः तत्तदाश्रमविहितकर्माभिरितियावत् । उज्झिताः परिहृताः परे कामादिवैरिणो येषां ते उज्झितपराः तेषां मानं ज्ञानं यस्मात्स उज्झितपरमानः तं ।[ तेषां प्रतिबंधकध्वंसपूर्वकंज्ञानदमित्यर्थः ]। नन्वेवं ध्यातोविष्णुः किं फलं ददातीत्यपेक्षायां नित्यशुद्धानंदरूपं मोक्षं ददातीत्याशयेनाह सदैवेति। सदैव। परमः नित्यः शुद्धः स्वरूपभूतइतियावत् आनंदो यस्मात्स तथोक्तस्तमित्यर्थः। यद्वा ननु विष्णुध्यानेन पूर्वं मुक्तिप्राप्ताः केचित्संतिचेत्तर्हि तस्मिन्ध्यानविधौ विश्वासो भविष्यतीत्यपेक्षायां तादृशाः संतीत्याह यन्मातेति । यन्माता यत्प्रमाता यद्ध्यातेति यावत् । ब्रह्मा दंपत्याद्याद्याश्रमैः संपूर्णब्रह्मचर्याद्याश्रमसंपन्नैर्देवादिभिस्सह । पतिं पालकं स्वोपास्यं विष्णुं । अयत् प्राप । ततश्च पूर्वकल्पे विष्णुध्यानेन तत्प्राप्तिरूपमुक्तिमंतो ब्रह्माद्याः संतीत्युक्तं भवति । अस्यां योजनायां विष्णोरेवध्येयत्वमुपपादयितुं अपरमानंदं उज्झितपरमानमितिविशेषणद्वयं । न विद्यते परमोयस्मात्सोऽपरमः आनंदयतीत्यानंदः । [ अहिकुंडलाधिकरणन्यायेन आनंदविशिष्टः आनंदरूपश्च ] ततः कर्मधारयः । उज्झितपरमानं ध्वंसितवैरिदर्पं । ततश्च विष्णोः सर्वोत्तमतया विशिष्टत्वात् आनंददातृत्वेन अनिष्टजनकवैरिदर्पहंतृत्वेनचेष्टत्वात् [ विष्णुत्वेनाधिकृतकृष्णाभेदलाभेनाधिकृतत्वाच्च ] तस्यैव ध्येयत्वमुपपन्नमितिभावः ॥ १॥

**मू॰ यस्य करालोलं चक्रं कालः परस्य हि करालोलं ॥**
**यस्यगदापत्रमानस्सन्योऽभ्यासोभवत्सदापत्रमानः ॥२॥**

(पद०) यस्य । करालः । अलं । चक्रं । कालः । परस्य । हि । करालोलं । यस्य । गदा । पवमानः । सन् । यः । व्यासः । अभ-वत् । सत् । आपवमानः ॥२॥

अथ भारतस्याप्रकृततया प्रामाण्यमस्तीति सूचनाय तत्कर्तुर्व्यासस्य भगवदवतारत्वेनाप्तत्वं भगवतोपि सशरीरस्यैव प्रळयेऽवस्थितत्या जगद्व्यापा-रोपयुक्त नानावतारकरणंच सूचयति यस्येति । यस्य परस्य पूर्वकालीन-स्य प्रळयेऽवस्थितस्येति यावत् नारायणस्य । अलं अत्यंतं । करालः क्रूरः । कालः कालाख्यदुर्गात्मकलक्ष्मीरूपविशेषः (महतश्चतुर्मुखादित्याद्य विव अभिमताभिमानिनोरभेदव्यपदेशः) करालोलं करे सम्यक्भ्रमत् । चक्रं । पवमानः सर्वज्ञोवायुः । यस्य । करालोला गदा गदाभिमानी सर्वा-युधोपलक्षणमेतत् । प्रळयका(रि)लीनतयाऽभ्यर्हितत्वाच्चक्रगदयोः स्वशब्दे-नोपादानं । सः श्रीनारायणः आपवमानः आपवमानं पवमानमभिव्याप्य । सत् स्वोदरे विद्यमानं जगत् । भवत् भावयन् । स्वातन्त्र्यज्ञापनायव्य-त्ययः । सः व्यासः व्यासवान् विस्तृतः विभागवान् वा । अभवत् चतुः पंचद्विषट्दशशताद्यात्मकोऽभवदित्यर्थः । यः सन् सर्वदा विद्यमानः नानारूपः । यच्छब्दबलात् स इति लभ्यते । सः व्यासः वेदव्यासोऽभव-दितियोज्यं । व्यासः कुत्राऽवतीर्णइत्यतस्तं विशिनष्टि सदापवमानइति । अप्सुप्रवेशादापवेतिशक्रेणोक्तत्वादापवो वसिष्ठः तत्संबंधादापवो वसिष्ठा-न्वयः । ततश्च सन् निर्दुष्टश्चासौ आपवश्च सदापवः तस्मिन्मानं निर्माणं अवतरणं यस्यसतथोक्तः ॥२॥

मू० यस्य रमा नपनोगं जगृहे विश्वंभरापि नमनोऽगं ॥
यस्य पुमानानंदं भुङ्क्ते यद्धाम कपतिमानानंदं ॥३॥

(पद०) यस्य । रमा । न । मनोगं । जगृहे । विश्वंभरा । अपि । नमनः । अगं । यस्य । पुमान् । आनंदं । भुङ्क्ते । यद्धाम । कपतिमानानंदं ॥३॥

ननु व्यासस्य भगवदवतारत्वेपि इंद्राद्यवतारेऽर्जुनादाविव ज्ञानादिह्रासे-

१ आनन्दमित्यस्यावृत्तिः ।

मात्स्यनिर्णीतमझ्झक्षमित्यत आह यस्येति । विश्वंभरा । देहेन मनसा-
चेतिशेषः । मनसा विश्वंपश्यंस्यपि (देहेनसर्वधारकापि) रमा । यस्य मनोगं
येन ध्यानेन ज्ञानं विश्वं सर्वं तत्स्वयं। न जगृहे नापश्यत । किंच यस्य
नमनः नमस्कर्ता स्तोता वा पुमान् । अगं नगच्छतीत्यगं सर्वदावि-
द्यमानं । आनंदं भुंक्ते । अपिच आनंद आनंदरूपं । यद्धाम यस्य व्या-
सस्य स्वरूपं । कपतिमानानंदं कः ब्रह्मा पतिः शिवः (कः ब्रह्मा पतिः
येषांते कपतयः अशेषदेवाः) मा रमा अनःप्राणः तेषामानंदोयस्मात्तथोक्तं ।
यदित्यत्रत्य यच्छब्दस्य पूर्वश्लोकस्थेन सइत्यनेनान्वयः । तथाच व्यासस्य
रमाद्यज्ञातज्ञातृत्वेनापरिच्छिन्नज्ञानत्वात्सकलसज्जनमोक्षदातृत्वाद्रमाद्यानंदो-
पजीव्यानंदस्वरूपत्वाच्च ज्ञानादिह्रासेनानाप्तत्वशंका नेतिभावः॥३॥

मू० परमेषुयदातेजः परमेषुचकारवासुदेवोजः ॥
मानधिविभ्रन्सुमनोमानधिमासीन्नवासुदेवोऽजः ॥४॥

(पद०)परमेषु । यत् । आ । तेजः । परं । एषु । चकार । वासुदेवः ।
जः । मानधि । बिभ्रन्सु । मनः । मा । अनधिमा । आसीत् । न ।
वासुदेवः । अजः ।

ननु व्यासोऽभवदिति कृष्णावतारोप्यादिकालएवोक्तः स नयुक्तः तथात्वे
तस्य वसुदेवजातत्वासंभवेन वासुदेवशब्दवाच्यत्वानुपपत्तिप्रसंगात् । देवकी-
जठरभूरुडुराजइतिप्रमाणविरोधाच्चेत्यतो वासुदेवशब्दवाच्यत्वे उपपत्तिंताव-
दाह परमेष्विति । जः यः जययोरभेदात् । वासुदेवः विद्वद्गृह्य
हरिः सः । अजः अजोपि । वासुदेवः वासुदेवपदवाच्यः आसीत् । कस्मा-
दित्यत्राह । यत् यस्मात् । परमेषु इंद्राद्यपेक्षया उत्तमेषु । मानधि मा-
नानि ज्ञानानि धीयंतेऽस्मिन्निति मानधि ज्ञानपूर्णं । मनः चित्तं । बिभ्रत्सु
एषु ब्रह्मादिदेवेषु । परं लोकविलक्षणं । आतेजः स्वविषयकं ज्ञानं
चकार तस्मात् अनेन वंज्ञानं सु समीचीनंपूर्णं यस्यतत्वसु ज्ञानेन पूर्णमन
तेन देवःदेवनंस्तुत्यादि येषांते वसुदेवाः( वसु धनं ज्ञानधनं तेनदेवाःप्रकाश-
मानाः ) पूर्वोक्ताः ब्रह्मादयः तेषामयंसंबंधीवासुदेवः । संबंधश्चतद्ज्ञानदात्

स्वादिरूपइतिवासुदेवशब्दनिर्वचनंदर्शितमितिज्ञातव्यं । तथा कृष्णः स्वप्रादुर्भावानंतरं स्तुत्यर्थमागतानां ज्ञानपूर्णमनस्कानामप्युक्तं तद्ज्ञानंस्तुत्युपयुक्तं चकार । ततएवनिमित्ताद्वासुदेवशब्दवाच्यः । न नतु वसुदेवजातत्वेन अजत्वविरोधादितिभावः । ननु आतेजश्चकारेत्युक्त्या रमाज्ञानं ब्रह्मादिज्ञानसममेवेतिप्राप्तमतआह मानधिमेति । मा रमा । अनधिमा अधि अधिका मा ज्ञानंयस्यसः अधिमः नविद्यते अधिमोयस्याःसकाशात् एतेषूक्तदेवेषु सा अनधिमा आसीदित्यर्थः ॥ यद्वा नवासुदेवः अजइतिपदच्छेदः । निर्वचनाद्वाशब्दोनवेत्यर्थकः ततश्च अजोपि पायुगुह्ययोरैक्याभिप्रायेण वानां नवानां असूनां इंद्रियाभिमानिनां देव इति वा । वानाम् नवानामसूनां देवोपि जयोपि योगिनां यस्माद्भवतीतिवा वासुदेवशब्दस्यनिर्वचनांतरंच प्रदर्शितं भवतीति ज्ञातव्यं ॥४॥

मू० सोऽजनिदेवकयंते यस्मादनुकंपनाऽवदेवकयंते ॥
अवदन्देवकयंते भुवनं हि सुराः सदैवदेवकयंते ॥५॥

(पद०) सः । अजनि । देवकयंते । यस्मात् । अनुकंपना । अव । देवकयंते अवदन् । देव । वयं । ते । भुवनं । हि । सुराः । सदा । एव । देवकयंते ॥५॥

इदानीं देवकीजठरजातत्वप्रसिद्धिविरोधं परिहरन् देवैः कृतां स्तुतिं लेशतो दर्शयति सइति । सः कृष्णः । देवक्याः अंते समीपएव । अजनि प्रादुर्बभूव । अतएव नतन्मलोत्थः । तत्समीपएव प्रादुर्भूतत्वात्तज्जठरजातत्वप्रसिद्धिरितिभावः । किमर्थं प्रादुर्भूत इत्यत उक्तं देवकयन्त इति । देवानां कः कारकारः येषामस्तीति ते देवकिनो दैत्याः । तेषामंते । तादर्थ्ये सप्तमी । विनाशायेत्यर्थः । कस्मान्नमलोत्थइत्यतउक्तं यस्मात् सुराः वेदाभिमानिनो देवाः । देवकयंतेऽवदन्निति कं सुखं एषामस्तीति किनः तेचते देवाश्च देवकिनः । कडारादित्वात्परनिपातः तेषामंते तारतम्यांतगप्रकृतिपरं परिपूर्णसुखमेवावदन् । तस्मान्नमलसंभावनमस्मिन्निति-भावः । सुराः ब्रह्माद्याः अवतारानंतरं अनुकंपना अव देव इतिपदच्छेदः । तथाच सज्जनेषु हरेः अनुकंपना कृपा यथास्यात्तथा अवदन् अस्तुवन् । कि-

मिति । हेदेव । वयं कोब्रह्मा तन्निर्मितं वयंभुवनं अव रक्ष । हि यस्मात् सदैव ते त्वदधीनं वयं तस्मात् । वयंते इत्यपिच्छेदः । किंनां सुखिनां भुवनांतर्गतानां सज्जनानां अंते नाशे नृजन्माभिर्दैत्यैःप्राप्तेसति अव । इति शक्रोध्याहार्यः । तस्यचावदन्नित्यनेनान्वयः । अनुकंपनावत् एवेतिपदच्छेदः । अत्रानुकंपनावत् अवदन्नितिक्रियाविशेषणं । तथाच सुराणां यत्स्तुतिरूपं वचनं तल्लोकानुकंपापूर्वकमेवेत्युक्तंभवति । अस्यां योजनायां सदैवदे अवेति च्छेदोविवक्षितः । तथाच सदैवदे नित्यमेवसर्वपुरुषार्थप्रदे त्वयि विद्यमानं भुवनमवेतियोज्यं ॥५॥ सर्वपादगतान्तभागयमकरूपोयं श्लोकः ।

**मू० नीतोवसुदेवेन स्वततेन सगोकुलं सुवसुदेवेन ॥**

**तत्र यशोदा तनयं मेने कृष्णं स्वकीयमवदातनयं ॥६॥**

**(पद०) नीतः । वसुदेवेन । स्वततेन । सः । गोकुलं । सुवसुदेवेन ॥ तत्र । यशोदा । तनयं । मेने । कृष्णं । स्वकीयं । अवदातनयं ॥६॥**

इतःपरं भारतोदितं कृष्णचरित्रं क्रमणसंक्षेपतोदर्शयत्युत्तरश्लोकैः । नीतइति । सः कृष्णः । स्वततेन स्वस्मिन्व्याप्तेनहरिणाप्रेरितेन।यद्वा स्वस्य तातेनपित्रावसुदेवेन। गोकुलंप्रति। नीतः । तत्र गोकुले। यशोदा नंदभार्या। सुवसुदेवेन सु सुष्ठुवसुद्रव्यं येषां ते सुवसवः वैश्याः तेषां देवेन स्वामिना। यद्वा सु वसुदेवेन द्रोणनामकवसूत्तमस्वरूपेणनंदेन सह। अवदातनयं अवदाताः शुद्धाः मुक्ताः तान्नयतीति अवदातनयः नित्यमुक्तइतियावत् । तं कृष्णं । स्वकीयं तनयं । सु सम्यक् । मेने अमन्यतेत्यर्थः ॥६॥

**मू० ववृधे गोकुलमध्याद्योदेवो विश्वमद्भुताकुलमध्यात् ॥**

**तत्रच पूतनिकायावधमकरोद्यन्निजाःपूतनिकायाः ॥७॥**

**(पद०)ववृधे । गोकुलं। अधि। आ।द्योदेवः।(आत् । यः । देवः। )विश्वं। अद्भुताकुलं। अधि। आ। अत् ॥ तत्र च। पूतनिकायाः। वधं । अकरोत् । यन्निजाः । पूतनिकायाः ॥७॥** अगोकुलमितिवा च्छेदः ।

**ववृधइति । द्योदेवः** स्वर्गोपलक्षितसर्वलोकस्वामीकृष्णः । **आगोकुलंअधि** ईषत् (आसमंतात् ) गवां अज्ञदृष्टीनां कुलं समूहं इंद्रिय-

संमूढजनमधिकृत्य अज्ञदृष्टयेति यावत् । ववृधे । न वस्तुतः । कुतः ? । अद्भुताकुलं अद्भुतमनिर्वाच्यं यथास्यात्तथा आकुलं व्याकुलं विश्वं । अध्यात् अधि आधिक्येन आसमंतात् अत्तीत्यत् संहर्तेति यावत् । तथाच प्रळयेप्यवस्थितस्य न वस्तुतो वृद्धिरितिभावः । यद्वा । योदेवः अद्भुताकुलं विश्वं सर्वं अगोकुलं गोकुलविरोधितृणावर्तादिकं । अध्यात् अधि आधिक्येन आसमंतात् अत् संहर्ता यः तस्मात् । आत् अकारशब्दवाच्यात् कृष्णात् । गोकुलं अधि आधिक्येन । ववृधे अवर्धत । तृणावर्तादिवैरिपराभूतंनाभूदित्यर्थः । तत्र गोकुले । चशब्दः कर्मांतरसमुच्चयार्थः । नाम्ना पूतनिकायाः राक्षस्याः वधमकरोत् । स्त्रीहत्यया पापंस्यादित्यतउक्तं । यन्निजाः यद्भक्ताः । पूतनिकायाः पूतः शुद्धः कर्मवशात् निः नीचः कायो येषांते तथोक्ताः कर्मवशात् नीचयोनिं प्राप्ताः यद्भक्ता अपि शुद्धाः भवंति इति शेषः तस्यपापमसंभावितमेवेतिभावः। अनेन पूतनिकाविष्टोर्वश्याः शापमोचनेन शुद्धिः सूचितेति ज्ञातव्यं ॥७॥

**मू० अधुनोच्छकटंलोली पादांगुष्ठेन वातपेशशकटं लोली ॥**
**अतनोद्रक्षामस्य स्वाज्ञानाद्गोपिका सदेरक्षामस्य ॥८॥**

(पद०) अधुनोत् । शकटं । लोली । पादांगुष्ठेन । वातपेशशकटं । लोली । अतनोत् । रक्षां । अस्य । स्वाज्ञानात् । गोपिका । सदा । ईरक्षामस्य ।

अधुनोदिति । शकटं शकटगं तन्नामकमसुरं । लोली देहचलनवान् । शकटस्याधःशायितः देहं चालयित्वा तत्समीपं प्राप्येतियावत । पादांगुष्ठेन । अधुनोत् अकंपयत् जघानेतियावत । प्रळये शेषशायित्वादिगुणकस्य नेदं चित्रमित्याशयेनाह वातपेशेति । वातो वायुः तंपिबंतीति वातपाः नागाः तेषामीशःशेषः तल्लक्षणं शं सुखकरं कटं आस्तरणं द्वितीयासप्तम्यर्थे तस्मिन् । लोली शयनवानित्यर्थः । अथवा वातपेशं शेषं शकटाय सुखास्तरणाय लोलयति प्रेरयतीति वातपेशशकटं लोली । तत्रमुमागमः छांदसोबोध्यः । यद्वा वाति प्रवर्तयति लोकं स्वोदयेनेतिवा सदागमनशीलइतिवा वः । सचासौ आतपेशः सूर्यः तस्यशकटं शकटपदोपलक्षितं रथं लोलयतीति

तथोक्तः । **गोपिका** यशोदा । **अस्य** पूर्वप्रकृतस्य अकारशब्दवाच्यस्यश्री कृष्णस्य । **स्वाज्ञानात्** स्वसंबंधादज्ञानात् स्वः स्वतंत्रोहरिः तदज्ञानाद्वा । **रक्षां** रक्षणं मन्त्रादिभिः । **अतनोत्** रक्षणं अज्ञानमूलकमेवत्युक्तमुपपादयति **सदेति** । **सदा** निरंतरं । **ई** रमां **रक्षतीतिईरक्षः** । नविद्यते मा मर्यादा यस्येत्यमः परिच्छेदत्रयरहितः ईरक्षश्चासौ अमश्चेति ईरक्षामः तस्येत्यर्थः । यद्वा **ईरो** वायुः **क्षामः** कृशः यस्मात्सतथोक्तः तस्येत्यर्थः । तथाच वायोरप्युत्तमस्य रमारक्षकस्य कृष्णस्य रक्षाकरणमज्ञानमूलकमेवेतिभावः ॥८॥

**मू० मुखलालनलोला तन्मुखगं जगदचष्ट सालनलोलाततं ॥**
**नाध्यैन्मायामस्यजगत्प्रभोःस्वाधिकततमायामस्य॥९॥**

**(पद०) मुखलालनलोला । तन्मुखगं । जगत् । अचष्ट । सालनलोलाततं ॥ न । अध्यैत् । मायां । अस्य । जगत्प्रभोः । स्वाधिकततमायामस्य ॥९ ।**

**मुखलालनेति** । गोपिकेति पदमनुवर्तते । **गोपिका** यशोदा । **अस्य** कृष्णस्य । **मुखलालनलोलासती** मुखस्य लालने चुंबनादिरूपे लोला आसक्ता सती । **तन्मुखगं** तस्य कृष्णस्य मुखेविद्यमानं । **जगत्** सावरणं ब्रह्मांडं । **अचष्ट** अपश्यत् । कथंभूतंजगत **सालनलोलाततं** । रलयोर्नणयोरभेदात सालनं सारणं सरक्षकमितियावत्त । तच्चतत लोलं चलं चेष्टमानमितियावत् तच्चनतअतच्चतद्व्यतिरिक्तं ततथोक्त । अनेन जगतो भगवदात्मकत्वात् तत्रजगद्दर्शनं नचित्रमिति शंका निरस्तेति ज्ञातव्यं भेदस्यान्यत्रसाधितत्वादिति भावः । इत्थंजगदाश्रयमुखवत्स्वरूपं माहात्म्य पश्यंत्यपि सा न साकल्येन तन्महिमानमपश्यदित्याह **नाध्यैदित्यादिना** **जगत्प्रभोः** जगत प्रकर्षेण भावयतीतिव्युत्पत्त्या जगदुत्पत्त्यादिकर्तुः **स्वाधिकततमायामस्य सु** सुष्टु **आ** अधिकः अत्युत्तमः अतिशयेन ततः तततमः व्याप्तः आयामः गुणक्रियारूपविस्तारो यस्य स तथोक्त तस्य कृष्णस्य । **मायां** महिमानं । **नाध्यैत्** नाध्यगच्छत् । अनयाऽज्ञा

जगदुत्पत्त्यादिकर्तृत्वरूपं नियामकतयान्तर्बहिर्विस्तृतावयवत्वादिरूपं च माहात्म्यान्तरमस्तीति भावः ॥९॥

**मू० तस्य सुशर्मण्यकरो दरिणो गर्गः सदुक्तिकर्माण्यकरोत् ॥**
**अवदन्नामानमयं जगदादिं वासुदेवनामानमयम् ॥१०॥**

(पद०) तस्य । सुशर्मण्यकरः । दरिणः । गर्गः । सदुक्तिकर्माणि । अकरोत् । अवदत् । नामानं । अयं । जगदादिं । वासुदेवनामानं । अयं ॥१०॥

तस्येति । **सुशर्मण्यकरः** सु समीचीनं शर्म सुखं येषांते सुशर्माणः मुक्ताः तैरण्यः प्राप्यः विष्णुः करे यस्य स तथोक्तः विष्ण्वर्चक इति यावत् । यद्वा सुशर्माभिर्यादवैः अण्यः प्राप्यः करो बलिर्यस्य सतथोक्तः । यादवानां पुरोहित इति यावत् । ( सुशर्मवरेण्यकर इतिवा पाठः । सुशर्म समीचीनं सुखं तस्मै वरेण्यौ वरणीयौ करौ यस्य सः) **गर्गः** । **दरिणः** दरःअस्यास्तीति दरी तस्य शंखपाणेः । तस्य कृष्णस्य । **सदुक्तिकर्माणि** सत्यो निर्दुष्टाः उक्तयः श्रुतयो येषां तानि सदुक्तीनि श्रुतिविहितानीति यावत् । तानिच तानि कर्माणि जातकर्मादीनिच तानि सदुक्ति कर्माणि । **अकरोत्** । अयं गर्गः । **वासुदेवनामानं** उक्तरीत्या वासुदेव नामकं कृष्णं । **अवदत्** । नन्दादीन्प्रतीतिशेषः । वासुदेवइति नामास्य चकारेत्यर्थः । कथंभूतमवदत् । **नामानं** नविद्यते आ समन्तात् साकल्येनेति यावत् प्रतिपादकं मानं प्रमाणं यस्य सतथोक्तः तं । पुनःकथंभूतं । **अयं** अयति प्रेरयतीत्ययः तं जगत्प्रेरकं । पुनःकथंभूतं । **जगदादिं** जगत्कर्तारं । गर्गः जातकर्मनामकरणादीन् संस्कारान् कृत्वा उक्तगुणहर्यवताररूपं कृष्णं नन्दादीन् प्रत्युपादिष्टवानित्यर्थः ॥१०॥

**मू० तस्य सखा बलनामा ज्येष्ठो भ्राताऽथ यन्निजाबलना मा ॥**
**यस्य च पर्यङ्कोयं पूर्वतनो विष्णुमजसपर्यङ्कोयं॥११॥**

(पद०) तस्य । सखा । बलनामा । ज्येष्ठः । भ्राता । अथ । यत् । निजा । बलना । मा । यस्य । च । पर्यङ्कः । अयं । पूर्वतनः।

त्रिष्णुं । अजसपर्यं । कः । अयं ॥११॥

तस्येति । तस्य कृष्णस्य । भ्राता । बलनामा । गर्गेणकृत इति शेषः । सः बलनामा तस्य सखा इष्टः ज्येष्ठश्च । इदं सखित्वं ज्येष्ठत्वंच स्वरूपतस्समत्वोत्तमत्वाभ्यां न किंत्ववतारेप्रियत्व पूर्वजत्वाभ्यामेवेत्याशयेन कृष्णबलयोः स्वरूपस्थितिमाह यन्निजेति । मा रमा । यन्निजाबलना यत् यस्यकृष्णस्य निजाबलना स्वाभाविकावरणरूपा " लक्ष्मीधराभ्यामाश्लिष्टइति वचनात् " अत्र बकारस्यवत्वं लस्यरत्वं च तयोरभेदविवक्षया । ( निजा स्वभावसिद्धा बलना बस्यलत्वं ललना भार्येतिवा ) यस्य कृष्णस्य । अयं बलः । पूर्वतनः पुरातनः मूलरूपसंबन्धी । पर्यङ्कः शय्याच । अथ तस्मात् । अजसपर्यं अजस्यब्रह्मणः सपर्या पूजायस्यस तथोक्तः तं ब्रह्मपूजितं । त्रिष्णुं विष्णुस्वरूपं कृष्णंप्रति । अयं बलः । कः किंशब्द आक्षेपे नोत्तमो नापिसम इत्यर्थः । तस्मादवतारप्रयुक्तमेव ज्येष्ठत्वादिकमिति लभ्यतइति भावः ॥११॥

मू० तेन हतो वातरयस्तृणचक्रोनामदितिसुतोऽवातरयः ॥
हरमाणो बालतमं स्वात्मानं कण्ठरोधिनाऽबालतमम् ॥१२॥

(पद०) तेन । हतः । वातरयः । तृणचक्रः । नाम । दितिसुतः । अवातरयः । हरमाणः । बालतमं । स्वात्मानं । कण्ठरोधिना । अबालतमम् ॥१२॥

तेनेति । वातरयः वातोवायुः तद्वत् रयोवेगो यस्यस तथोक्तः । तृणचक्रोनाम तृणावर्तोनाम । दितिसुतो दैत्यः । स्वात्मानं द्वितीया षष्ठ्यर्थे स्वात्मनः । कण्ठरोधिना कण्ठगश्वासरोधिनेत्यर्थः । तेन कृष्णेन । अवातरयः श्वासरूपवातवेगरहितस्सन् । हतः । कुतोहतइत्यतो हेतुगर्भविशेषणमाह हरमाणइति । अबालतमं अबाडतमं नविद्यते वाड्वाहको यस्यस अवाट् अता व्याप्ता मा रमा ( मितिः परिमाणं ) यस्य स अतमः अवाट्चासावतमश्च अवाडतमः तं बस्यवत्वं लस्यडत्वंच पूर्ववत् । बालतमं अतिशयेन बालरूपं । स्वात्मानमित्यस्य द्वितीयान्तस्यै

वात्रसंबन्धः। अत्र स्वशब्देन हननकर्ता कृष्णः परामृश्यते। स्वतन्त्रात्मानमिति वार्थः । तथाच यतो हरमाणः ( उन्नीतवान् ) ततो हतइत्यर्थः ॥१२॥

मू० सोऽवनि मध्येरंग न्नरिदरयुग्बालरूप मध्येरंगन् ॥

अमुषन्नवनीतमदःसगोकुले गोपिकासुनवनीतमदः ॥१३॥

(पद०) सः । अवनिमध्ये । रंगन् । अरिदरयुक् । बालरूपं । अधि । आ । ईरं । गन् । अमुषत् । नवनीतं । अदः । सगोकुले । गोपिकासुनवनीतमदः ॥१३॥

सइति । सगोकुले गोकुलसहिते । अवनिमध्ये गृहप्रदेशमध्ये । रंगन् रिंखणंकुर्वन् । अरिदरयुक् चक्रशङ्खधरः । सः कृष्णः । बालरूपं अधि आ ईरं गन् इति पदच्छेदः । तथाच बालरूपं ईरम् वायुं । अधि अधिरुह्य । आ समन्तात् । गन् गच्छन् । अदः दूरस्थितं शिक्योपरिगभाण्डे विद्यमानमिति यावत् । नवनीतं । अमुषत् । कथंभूतः । गोपिकासुनवनीतमदः । गोपिकानां सुशोभनो नवः स्तवः तेन नीतः प्राप्तः मदः सुखं यस्य स तथा । (अथवा गोपिकासु नवेन नूतनेन चौर्येण उत्पादितः मदः अनुग्रहसुखं आग्रहो वा यस्मात्सइति वा ) ॥१३॥

मू०तन्माता कोपमिता तमनुससारात्मवादवाको(आत्मवाको)पमिता ।

जगृहे सानमनंतं देवं तच्चिन्तयैव सानमनंतं ॥१४॥

(पद०) तन्माता । कोपं । इता । तं । अनुससार । आत्मवादवाकोपमिता । जगृहे । सा । अ (आ) नमनं । तं । देवं । तच्चिन्तया। एव । सानं । अनंतं ॥१४॥

तन्मातेति । तन्माता तस्य कृष्णस्य माता यशोदा। नवनीतचौर्यादिना कोपं । इता प्राप्तासती । तं पलायमानं कृष्णं । अनुससार अन्वगच्छत् । कथंभूता । आत्मवादवाकोपमिता आत्मवादवाकः परमात्मप्रतिपादकवाक्यं वेदः ( आत्मनोवाकः वेदः ) तत्सदृशी। यथा वेदवाक्यं आपातप्रतीतं कर्मादिकं परित्यज्य मुख्यतः परमात्मानमेवानुगच्छति तथा यशोदापि इतरत् गृहकृत्यं परित्यज्य तमेवान्वगच्छदिति भावः । सा

यशोदा । अनमनं न विद्यते नमनं प्रह्वीभवनं यस्य स तथा तमिति ।
मातृभक्त्या आ ईषत् नमनं यस्यसतथा तमितिवा । देवं क्रीडादिगुण
विशिष्टं । तं कृष्णं । तच्चिन्तयैव ' इयं मां गृह्णात्विति तदिच्छयैव ' न
स्वप्रयत्नेन । जगृहे जग्राह । पुनःकथंभूतं । सानं जगद्व्यापारसहितं (सचेष्टं
धावन्तं) पुनःकथंभूतं । अनंतं गच्छन्तं । अपरिच्छिन्नं वा।।१४।।

**मू० अथ सान्तरितामानं विष्णुं विश्वोद्भवं सदांतरितामानं ॥**

**अनयद्दामोदरतां योऽरमयत्सुन्दरीं निजामोदरतां ॥१५॥**

**(पद०) अथ। सा। अंतरितामानं। विष्णुं। विश्वोद्भवं सदा। अंतारितामानं। अनयत्। दामोदरतां। यः। अरमयत्। सुंदरीं। निजामोदरतां ॥१५॥**

**अथेति** । अथ अनंतरं । **सा** यशोदा । **अंतरितामानं** अंतः इतं प्राप्तं आसमन्तात् सर्वस्मिन् विषय इति यावत् मानं ज्ञानं यस्य स तथा तं ( अंतः इताः गताः अमानाः अभिमानरहिताः मुक्ताः यस्य स तथा तं) यद्वा अन्तः उदरे इताः प्राप्ताः अःब्रह्माच मा रमाच अनःप्राणश्च यस्यसतथोक्तस्तमित्यर्थः । **विष्णुं** व्याप्तं । **विश्वोद्भवं** विश्वस्य उद्भवो यस्मात्सतथातं । **सदा** सर्वदा । **अंतरितामानं** अंतः इतं गतं अमानं अपरिमितं जगज्जातं यस्यसतथातं । यद्वा सदा सर्वदा । **अंतरितामानं** अंतरितं व्यवहितं अमानं अज्ञानं यस्यसतथातं । तथाच बन्धायोग्यमित्यर्थो लभ्यते । एतदुपपादनायैव प्राचीनविशेषणानि । तं कृष्णं । **दामोदरतां** दाम रज्जुः उदर बंधकं यस्य स दामोदरः तस्यभावः दामोदरतातां। **अनयत्** दाम्ना बद्धंचकारेत्यर्थः। जडाज्ञानं तस्य बंधकतया नास्तीति पूर्वमुक्तं । इदानीं तदभिमानिनी रमापि तदुपजीविनी न तद्बंधिकेत्याशयेनाह **य** इति । तमित्यन्वयः। तथाच बंधायोग्यस्यापि यद्बन्धनं तत्तदिच्छयैवेति भावः । **यः** कृष्णः । **निजामोदरतां** निजःस्वरूपभूतः आमोदः पूर्णं सुख इतरगुणोपलक्षणमेतत् तस्मिन्रतां स्निग्धां । **सुन्दरीं** दुर्गां सदेत्यावर्तते । **सदा** । **अरमयत्** नित्यमुक्तामकरोत् ।।१५।।

**मू०** **चक्रे सोऽर्जुननाशं प्राप्नोति यत्स्मृतिः सदाऽर्जुनना शं ॥**
**तौ च गतौ निजमोकस्तेनैव नुतेन यन्निजानिजमोकः ॥१६॥**

(पद०) चक्रे । सः । अर्जुननाशं । प्राप्नोति । यत्स्मृतिः । सदा अर्जुनना । शं । तौ । च । गतौ । निजं । ओकः । तेन । एव । नुतेन यत् । निजानिजमोकः ॥१६॥

किंच संसारपाशात् मोचयन् कृष्णः अन्यैर्न बद्धुं शक्य इत्याशयेनाह चक्र इति । **सः** कृष्णः । **अर्जुननाशं** अर्जुनयोः तन्नामकवृक्षयोः नाशं । **चक्रे** । **यत्स्मृतिः** यस्य स्मरणवान् । **अर्जुनना** अर्जुनः धवलः शुद्धः सचासौ ना पुमांश्च सतथा । शुद्धोभूत्वेति यावत् । **सदा** । **शं** नित्यसुखं मोक्षंचाप्नोति । **तौ** वृक्षशरीरौ नळकूबरमणिग्रीवनामानौ सुरौ । **नुतेन** स्वकर्तृकस्तुतिविषयेण । **तेनैव** कृष्णेनैव । न स्वप्रयत्नेनेत्यर्थः श्री कृष्णानुग्रहेणैव शापमोक्षं प्राप्तौ । **निजं ओकः** स्वकीयं स्थानं स्वर्गस्थानं । **गतौ** प्राप्तौ । चशब्दात् तौ तदाविष्टौ धुनिचमुनाम्नानौ दुष्टौ तावपि निजं स्वमोकः स्थानं तमोलक्षणंगताविति सूचयति । कुत एतदुभयमित्यतो भगवत्स्वभाव एतादृश इत्याह **यन्निजेति** । **यत्** यस्मात् । **निजानिजमोकः** निजानिजयोः भक्तद्वेषिणोः मोकः मोचनं स्वस्वयोग्यं भवतीति शेषः । तेनेत्यन्वयः ॥१६॥

**मू०** **अथ बृन्दावनवासं गोपाश्चक्रुर्जगच्छ्रिताऽवनवासम् ॥**
**तत्र बकासुरमारः शौरिरभून्नित्यसंश्रितासुरमारः ॥१७॥**

(पद०) अथ । बृंदावनवासं । गोपाः । चक्रुः । जगच्छ्रिता । अवनवासं । तत्र । बकासुरमारः । शौरिः । अभूत् । नित्यसंश्रितासुरमारः ॥१७॥

**अथेति** । **अथ** अनंतरं । **गोपाः** । **बृंदावनवासं** गोपगोपीगवां बृन्दस्य समूहस्य अवनं रक्षणं यस्मात्तत्तथा तस्मिन् बृन्दावनसंज्ञवने वासं । **जगच्छ्रिता** जगन्निवासेन कृष्णेन सह । **चक्रुः** । कृष्णसाहित्यात् न स वन वास इत्याह **अवनवासमिति** । न वनवासः अवनवासः तं स्वर्गतुल्य

मिति भावः । तच्चोक्तं "बृन्दावनं यदधिवासत आस सङ्घ्यङ्महेन्द्रसद्म-सदृशं किमुतत्र पुर्यामिति"। तत्र बृन्दावने । शौरिः शूरस्य गोत्रापत्यं पुमान् कृष्णः । बकासुरमारः बकः तन्नामकश्चासावसुरो दैत्यश्च तं मारय तीति बकासुरमारकः । अभूत् इत्यन्वयः । कथंभूतःशौरिः। नित्यसंश्रिता-सुरमारः असुश्च रमाच असुरमे नित्यं संश्रितेचते असुरमेच ते रमयतीति रः लोके मरणं मुख्यप्राणेन तमोभिमानिन्यादुर्गया च भवति तदुभयाश्र-यस्य तदुभयरतिप्रदस्य कृष्णस्यासुरमारकत्वं नाश्चर्यकरमिति भावः ॥१७॥

मू० अहनद्वत्सतनूकं योपाल्लोकं स्वयत्नवत्सतनूकं ॥
सोपाद्वत्सानमरस्सहाग्रजो गोपवत्सवत्सानमरः ॥१८॥

(पद०) अहनत् । वत्सतनूकं । यः । अपात् । लोकं । स्वयत्न-वत् । सतनूकं । सः । अपात् । वत्सान् । अमरः । सहाग्रजः । गोपवत्सवत् । सानमरः ॥१८॥

अहनदिति । सतनूकं उः रुद्रः को ब्रह्मा एतौ तनू विष्ण्वपेक्षया अल्पौ नीचावितियावत् तौ च तौ उकौच तनूकौ ताभ्यां सहितः सतनूकः तं लोकम् । स्वयत्नवत् सुष्ठु नविद्यते यत्नो यस्यसः स्वयत्नः पुमान् तद्व-त् । यः । अपात् । यश्च अमरः मरणशून्यः । सानमरः अनः प्राणः मा रमाच अनमे ताभ्यां सहितं सानमं जगत् तद्रमयतीति सानमरः । सहाग्रजः अग्रजेनसहितः कृष्णः । गोपवत्सवत् गोपालसूनुवत् । वत्सा-न् । अपात् पालयामास । तत्रप्राप्तं वत्सतनूकं वत्सरूपधरंदैत्यं । अह-नत् हिंसितवान् जघान ॥१८॥

मू० स विभुः श्रीमानहिके ननर्त यस्य श्रमानमामानहिके ॥
अकरोन्नद्युदकांतं कान्तं नीत्वोरगं सनाद्युदकान्तं ॥१९॥

(पद०) सः । विभुः । श्रीमान् । अहिके । ननर्त । यस्य । श्रमा-नमा । मा । न । हि । के । अकरोत् । नद्युदकांतं । कान्तं । नीत्वा । उरगं । सः । ना । आद्युदकान्तं । (नाद्युदकांतं) इतिव च्छेदः ॥१९॥

**सइति । विभुः** समर्थः । **सः** कृष्णः । **अहिके** सर्पशिरसि । **ननर्त** नृत्यं कृतवान् । तथापि सः **श्रीमान्** । सर्पविषेण तस्यशरीरकांतिर्नापगतेति भावः । प्रलयकाले सर्पशयनस्य नेदमाश्चर्यमित्याशयेनाह **यस्यश्रमेति । के** प्रलयोदके । ' अहिके ' इत्यस्यावृत्तिः । अत्र क शब्दः शरीरपरः तस्मिन् शयानस्येति शेषः । तथाच प्रलयोदके अहिशरीरे शयानस्य **यस्य** श्रीकृष्णस्य । **मा** श्रीः शरीरकांतिः । **श्रमानमा** श्रमेण सर्पविषजन्यश्रमेण आ ईषदपि नमा नम्रा । श्रमकृतैषत्संकोचवतीति यावत् । **न** नबभूव । **हि** इत्यनेन तत्र प्रमाणप्रसिद्धिं दर्शयति । तथाच प्रलयोदके अहिशरीरे शयानस्य यस्य श्रीकृष्णस्य शोभा नसंकुचिताभवति तस्याहिमस्तके नर्तनमात्रेण शोभाऽनपगमइति किंवक्तव्यमिति भावः । **सः श्रीमान्** इतिसंबन्धः । **ना** परमपुरुषः । **नद्युदकांतं** नद्याः यमुनायाः उदकस्य अन्तो नाशो विषेणदूषणं यस्मात्सतथातं । **उरगं** कालियं । **आद्युदकांतं** द्वीपं । आदौ अन्तेच उदकं यस्येति योगात् द्वीपमेवहितादृशं । तथाच समुद्रमध्यगतं रमणकाख्यद्वीपंप्रतीत्यर्थः । ( नाद्युदकान्तं नादः घोषः अस्यास्तीति नादी समुद्रः तस्य उदकमध्यस्थ द्वीपं प्रतीत्यर्थइतिवा ) **नीत्वा** प्रापयित्वा । तन्नद्युदकमिति शेषः । **कान्तं** मनोहरं निर्विषमिति यावत् । **अकरोत्** कृतवानित्यर्थः ॥१९॥

**मू० हत्वा धेनुकमूढं बलात्प्रलंबं च खेट् सधेनुकमूढं ॥**

**व्रजमावीदमृताशः पीत्वा वह्निं चरस्थिरादमृताशः ॥२०॥**

(पद०) **हत्वा । धेनुकमूढं । बलात् । प्रलंबं । च । खेट् । सधेनुकं । ऊढं । व्रजं । आवीत् । अमृताशः । पीत्वा । वह्निं । चरस्थिरादं । ऋताशः ॥२०॥**

**हत्वेति** । ननु विघ्नेश्वरवरेण दीर्घायुष्यवतो धेनुकस्यहननं कथं कृष्णेन कृतमित्यत उक्तं **खेडिति** । **खेट्** आकाशाभिमानिनः धेनुकवरदातुर्विनायकस्येश्वरः कृष्णः । **धेनुकमूढं** धेनुकाख्यं मूर्खं खरमिति यावत् । ऊढं बलरामेणारूढं । **प्रलंबंच** । **बलात्** बलरामाविष्टरूपेण । **हत्वा** । सधे-

नुकं धेनुभिस्सहितं । व्रजं । अमृताशः । (आनंदामृताशनोपि) चरस्थिरा-दं चराचरभक्षकं । वह्निं । पीत्वा । आवीत् रक्षितवान् । ननु वह्निनाशः प्रकारांतरेणापि कुतो नकृत इत्यत उक्तं ऋताशः सत्यसङ्कल्पइत्यर्थः ।२०।

मू० गिरिणा रक्षापि कृता व्रजस्य तेन स्वरक्षरक्षापिकृता ॥
शक्राय व्यंजयता स्वां शक्तिं विश्वमात्मनाऽव्यं व्यंजयता ।२१।

(पद०) गिरिणा । रक्षा । अपि । कृता । व्रजस्य । तेन । स्व-रक्षरक्षापिकृता । शक्राय । व्यंजयता । स्वां । शक्तिं । विश्वं । आ-त्मना । अव्यं । व्यंजयता ॥२१॥

गिरिणेति । तेन कृष्णेन । गिरिणा गोवर्धनपर्वतेन । व्रजस्य इ-न्द्रप्रमुक्त मेघपीडितस्य गोकुलस्य । रक्षा । कृता । अपिशब्दः पूर्वोक्त रक्षणसमुच्चायकः । कथंभूतेन तेन । स्वरक्षरक्षापिकृता स्वः (स्वरित्य-व्ययं स्वश्चासौ अश्च स्वरः स्वतन्त्रः ) आनंदरूपी कृष्णः तस्मै क्षीरं क्ष-रंतीति स्वरक्षरा गावः तासां क्षः क्षयो येभ्यस्ते स्वरक्षरक्षाः मेघाः तान् आ समन्तात् पालयतीत्यापिरिंद्रः तं करोतीति कृत् तेन इन्द्रस्य मेघपा-लकत्वप्रदेनेति यावत् । नन्विन्द्रेण कथं स्वोपजीव्यभगवद्विरोधः कृतइति चेत् कृष्णे भगवदवतारत्वस्य तेन विस्मृतत्वात् । अतएवाह शक्राय स्वां शक्तिं व्यंजयतेति । (स्वां स्वकीयां शक्तिं भगवदवतारत्वस्मारकशक्तिं प्रकाशयतेत्यर्थः ) प्रयोजनांतरमाह विश्वमित्यादिना । अव्यमित्यस्य देहलीदीपन्यायेनोभयत्रसंबन्धः । तथाच । आत्मना स्वेन । अव्यं रक्ष्यं । विश्वं अव्यं (सत्) रक्ष्यं । व्यंजयता । गोपान्प्रति विज्ञापयतेत्यर्थः । व्रजरक्षणेन सर्वजगद्रक्षणमपि मयैवक्रियतइति गोपानां ज्ञापितवानिति भावः ॥२१॥

मू० रेमे गोपीष्वरिहा समन्मथाक्रांतसुन्दरीपीष्वरिहा ॥
पूर्णानंदैकतनुः सविश्वरुक्पावनोप्यानंदैकतनुः ॥२२॥

(पद०) रेमे । गोपीषु । अरिहा । सः । मन्मथाक्रांतसुन्दरीपीषु । अरि-हा । पूर्णानन्दैकतनुः । सः । विश्वरुक्पावनः । अपि । आनंदैकतनुः

रेम इति । **अरिहा** शंखचूडाख्यवैरिहंता । **सः** कृष्णः । **गोपीषु । रेमे** । कथंभूतासु । **मन्मथाक्रान्तसुन्दरीपीषु** इः कामः पिः पाता यस्य तदिपि स्त्रीगुह्यं तदेव श्रीः संपत् यासां ताः ईप्यः मन्मथाक्रान्ताः कामाविष्टाश्चताः सुंदर्यश्च ता ईप्यश्चतास्तथा तास्वित्यर्थः । कामिपुरुषवत् तस्य स्त्रीसेवया रमणं नेत्याह **अरिहेति** । अत्र रस्य लत्वं विवक्षितम् । यमक संरक्षणार्थं तथोक्तं । लिट्लेहनं सेवनं तदभावो अलिट् तेन अलिहा असेवनेन सेवां विनेति यावत् । कुत इत्यतआह **पूर्णेति** । यतः इति शेषः । **सः** कृष्णः । यतः **पूर्णानंदैकतनुः** पूर्णः सर्वेभ्योऽधिकः आनन्द एव एका मुख्या तनुः शरीरं यस्य सः अवाप्तसमस्तकामइतियावत् । अतोअसेवयेति गम्यतइति भावः । तर्हि किमर्थं रेमइत्यतआह **विश्वरुगित्यादिना** । अपि यद्यपि पूर्णानन्दैकतनुः **विश्वरुक्पावनः** विश्वेषां सर्वेषां भक्तानां कामाद्युपद्रवहन्ता । **आनन्दैकतनुः** आनन्दयतीत्यानंदा तत्प्रदा एका मुख्या तनुरवतारो यस्यस तथा । तथाच गोपिकानां भक्तत्वात् तासां कामाद्युपद्रवनाशायानंदप्रदानायच रमणं न स्वप्रयोजनायेति भावः ।२२।

**मू० अथ हतयोर्गळिकेश्योः श्वफल्कजप्रापितः पुरीं गळिकेश्योः॥**
**भङ्क्त्वा धनुराजवरं जघान तेनैवच स्वयं राजवरं ॥२३॥**

(पद०) **अथ । हतयोः । गळिकेश्योः । श्वफल्कजप्रापितः । पुरीं । गळिकेशी । ओः । भङ्क्त्वा । धनुः । आजवरं । जघान । तेन । एव । च । स्वयं । राजवरं ॥२३॥**

अथेति । **अथ** अनंतरं । **गळिकेश्योः** । गळसाध्यध्वनिविशेषोऽस्यास्तीति गळी वृषभाकारोऽरिष्टनामाऽसुरः । केशा अस्य सन्तीति केशी तुरगरूपो दैत्यः तयोर्गळिकेश्योः । गळिकेशिनोरिति वक्तव्ये इन्यर्थक इप्रत्ययोप्यस्तीत्याशयात् व्यत्ययः दैत्ययोः कुत्सनार्थइत्यप्याहुः । **हतयोः** (सतोः)। **पुरीं** मथुरां (प्रति)। **श्वफल्कजप्रापितः** श्वफल्कजोऽक्रूरः तेनप्रापितः । **गळिकेशी** गळिनौ सुगळौ (सुस्वरकण्ठौ) स्तुवत्कण्ठाविति यावत् । तौचतौ केशौच कोब्रह्मा ईशो रुद्रः तावस्यस्तइति

तथोक्तः ब्रह्मरुद्राभ्यां स्तूयमानइति यावत् । सइत्यनुवर्तते । **सः** कृष्णः । **स्वयं** स्वयमेव नान्यवरादिनेति भावः । **ओः** उकारवाच्यस्य रुद्रस्य ( अः अकारवाच्यः उः उत्कृष्टः अ श्चासौ उश्च ओः । आत् चतुर्मुखात् उः उत्कृष्टः ओः श्रीकृष्णः) **धनुः** रुद्रधनुरित्यर्थः । कथंभूतं धनुः । **आज वरं** अजो ब्रह्मा रुद्रो वा तत्संबंधी आजः वरो यस्य तत्तथोक्तं तत् । **भङ्क्त्वा** । तेन भग्नेन धनुषा तत्खण्डेनेति यावत् । **राजवरं** कंसबलं । **जघान** । बस्य वत्वं लस्य रत्वं च यमकार्थं । एवमग्रेपि द्रष्टव्यम् ।२३।

**मू० मृद्नन्गजमुग्रबलं सबलो रङ्गं विवेश सृतिमुग्रबलं ॥**
**हत्वा मल्लौ बलिनौ कंसं च विमोक्षितौ ततौ रौ बलिनौ ।२४।**

**(पद०) मृद्नन् । गजं । उग्रबलं । सबलः । रंगं । विवेश । सृति मुक् । रबलं । हत्वा । मल्लौ । बलिनौ । कंसं । च । विमोक्षितौ । ततौ । रौ । बलिनौ ।।२४।।**

**मृद्नन्निति** । **सबलः** बलरामेण सहितः । कृष्णइत्यध्याहारः । कृष्णः । **उग्रबलं** उग्रो रुद्रः तद्वरो यस्यस तथोक्तः वबयोरभेदात् रल योरभेदाच्च । उग्रं बलं यस्येति वा तं । **गजं** कुवलयापीडसंज्ञं । **मृद्नन्** मर्दयन् । **रबलं** वबयो रलयोरभेदः रवेण वाद्यध्वनिविशेषेण रं रमणीयं । अथवा रं रमणीयं वरं वरणीयं । **रंगं** युद्धसन्नद्धशत्रुस्थानं **विवेश** । (तत्र) **बलिनौ** बलं वरो वा अनयोरस्तीति तौ । **मल्लौ** चाणूरमुष्टिकसंज्ञौ । **कंसं** चशब्दात्तत्सैन्यंच हत्वा ब्रह्मादिसंस्तुतोऽभूदितिशेषः । **ततौ** तातौ देवकीवसुदेवौ । **विमोक्षितौ** । तेन बन्धादितिच शेषः । कथंभूतौ ततौ । **रौ** रमणीयौ भक्त्यादिगुणोपेतावित्यर्थः । पुनः कथंभूतौ **बलिनौ** वबयोरलयोश्चाभेदः नस्यणत्वंच 'अहं युवयोः पुत्रोभविष्यामी' पूर्वं स्वदत्तवरवन्तौ । संसारमोचकस्य निगडबन्धमोचकत्वं नाश्चर्यकर त्याशयेनाह **सृतिमुगिति** । **सृतिमुक्** सृतेः संसारात् मोचयतीति यतोऽतइतिशेषः । (श्रुतिमुक्) इति पाठे **जात** इतिशेषः । तथाच प दुपनीतः सर्वश्रुत्यध्ययनं सांदीपनिसकाशात्कृतवानित्यर्थः । श्रुतिं मु

उच्चारयतीति श्रुतिमुगिति व्याख्यानात् ॥२४॥

मू० प्रादात्सांदीपनये मृतपुत्रं ज्ञानदीपसान्दीपनये ॥
गुर्वर्थेऽज्ञानतमः प्रभेदिता नित्यसंभृताज्ञानतमः ॥२५॥

(पद०) प्रादात् । सांदीपनये । मृतपुत्रं । ज्ञानदीपसांदीपनये । गुर्वर्थे । अज्ञानतमःप्रभेदिता । नित्यसंभृताज्ञानतमः ॥२५॥

(पूर्वार्धे प्रदात्सांदीपनये गुर्वर्थं मृतपुत्रं इति, उत्तरार्धे ततमाज्ञानतमः प्रभेदिता इतिवा पाठः )।

प्रादादिति । सबलइति कर्तृवाचकपदमनुवर्तते । तथाच सबलः कृष्णः । गुर्वर्थे तादर्थ्ये सप्तमी गुरुदक्षिणार्थं । ज्ञानदीपसान्दीपनये ज्ञानमेव दीपः ज्ञानदीपः तस्य सम्यक् समन्तात् ये दीपकाः ते ज्ञानदीप सांदीपाः पण्डिताः तानपि यो नयति शिक्षयतीति सः ज्ञानदीपसांदीपनिः तस्मै । सांदीपनये सांदीपनिनाम्ने गुरवे। मृतपुत्रं। प्रादात्। ननु गुरुकुलवासेन भगवता विद्याप्राप्ताचेत् तस्याज्ञानं प्रसक्तं । अतोऽज्ञानतमइत्यादि विशेषणद्वयेन तं विशिनष्टि अज्ञानेति । अज्ञानतमःप्रभेदिता सर्वसज्जनाज्ञानतमच्छेत्ता । नित्यसंभृताज्ञानतमः नित्यं सम्यक् भृता धृता आज्ञा ययासा नित्यसंभृताज्ञा सा चासौ नता नम्रा ब्रह्मादि नतावा एवंभूता विद्याभिमानिनी मा रमा यस्य स तथोक्तः । स्वयं सकलाज्ञान च्छेत्ता सकलविद्यादेवता रमा यस्य नमनपूर्वकं आज्ञाधारिणी स कथं अज्ञानेन गुरुकुलवासं कुर्यात् । किंतु लोकशिक्षार्थमेव कृतवानिति भावः। (ततमाज्ञानतमः प्रभेदिता ततत्वात्तं अतिशयेन तं ततमं तच्च तत् अज्ञानं च तदेव तमः तस्य प्रभेदिता छेत्ता) ॥२५॥

मू० जित्वा मागधराजं तोषितमकरोत्सदात्मयोगधराजं ॥
अनुकुर्वन्निजसदनं चक्रे रम्यं पुरं सुबोधनिजसदनं ॥२६॥

(पद०) जित्वा । मागधराजं । तोषितं । अकरोत् । सदा । आत्मयोगधराजं । अनुकुर्वन् । निजसदनं । चक्रे । रम्यं । पुरं । सुबोधनिजसदनं ॥२६॥

**जित्वेति** । कृष्णइत्यध्याहारः । **मागधराजं** मगधदेशाधिपतिं जरासन्धं । **जित्वा** । **सदा** निरन्तरं । **आत्मयोगधराजं** आत्मनो योगः आत्मयोगः स्वविषयकध्यानादिरूपः तस्य धरः सचासावजो ब्रह्माच स तथोक्तः तं । **तोषितं** सन्तुष्टं । **अकरोत्** कृतवान् । ब्रह्माहि जरासन्धायाजेयत्वं वरं दत्वा कृष्णो यदि मद्वचनगौरवेण जरासन्धं नजयेत्तर्हि महाननर्थो भविष्यतीति भीतो बभूव । अतः कृष्णः तं जरासन्धं जित्वा तदीयभयनिवारणं कृतवानित्याशयः । **निजसदनं** श्वेतद्वीपाभिधं । **अनुकुर्वत्** अनुकरणशीलं समुद्रमध्यगतत्वात्तत्सदृशधर्मोपेतमिति यावत् । अतएव **रम्यं** मनोहरं । **पुरं** द्वारवत्याख्यं पुरं । **चक्रे** निर्मितवान् । कथंभूतं निजसदनं । **सुबोधनिजसदनं** सुबोधेन समीचीनेन भगवत्साक्षात्कारेण निजाः स्वस्वरूपाविर्भावं प्राप्ताः मुक्ताइति यावत् तेषां सदनं आवासस्थानं । सुबोधनिजसदनमित्यावर्तते । समीचीनबोधवद्यादवादिसदनं पुरं चक्रे । भगवतः मुख्यकर्तृत्वाच्चक्र इति प्रयोगः ॥२६॥

**मू० प्रसभं सगजबलस्य क्षत्रस्योच्चैस्समगधराजबलस्य ॥**
**मानं शिशुपालवरं हत्वा भैष्मीमवाप शिशुपालवरम् ॥२७॥**

**(पद०) प्रसभं । सः । गजबलस्य । क्षत्रस्य । उच्चैः । समगधराजबलस्य । मानं । शिशुपालवरं । हत्वा । भैष्मीं । अवाप । शिशुपालवरं ॥२७॥**

**प्रसभमिति** । **सः** कृष्णः । **गजबलस्य** गजशब्दोऽश्वाद्युपलक्षकः । तथाच गजादिरूपचतुरंगं बलं सैन्यं यस्य तद्गजबलं तस्येत्यर्थः । **समगधराजबलस्य** मगधराजसैन्येन सहितस्य । **क्षत्रस्य** रुक्म्यादिरूपस्य **उच्चैर्मानं** उत्कृष्टमहङ्कारं । **हत्वा** । **प्रसभं** यथास्यात्तथा । **भैष्मीं** रुक्मिणीं । **अवाप** । कथंभूतं मानं । **शिशुपालवरं** शिशुपालो वरो यस्मिन्विषयतयाऽस्तीति स तथोक्तः तं शिशुपालः रुक्मिण्यावरोऽस्माभिः कृतोऽस्तीत्येवं शिशुपालवरत्वविषयकमित्यर्थः । नन्वेवं भूतो अहङ्कारः कुतो जात इत्यतस्तं विशिनष्टि । **शिशुपालवरं** कृष्णस्य ( शिशवश्च

पालाः लोकपालाश्च ) शिशूभूताः पालाः पालकाः ये ब्रह्माद्याः तेषां दरो यस्मिन् अहङ्कारे कारणतयाऽस्ति स तथोक्तस्तं । ब्रह्मादिवरजन्यमिति यावत् ॥२७॥

मू० हंसो डिभिकश्चपलावमुना संमूदितौ यवनकश्चपला ॥
कीर्तिर्विमला विरता प्रतता विश्वाधिपावनीलाविरता ॥२८॥

(पद०) हंसः । डिभिकः । चपलौ । अमुना । संमूदितौ । यवनकः । च । पला । कीर्तिः । विमला । विरता । प्रतता । विश्वाधिपावनी । ईलाविरता ।'२८॥

हंस इति । अमुना कृष्णेन । चपलौ चञ्चलौ हंसोडिभिकश्चेत्येतौ । संमूदितौ निहतौ। यवनकश्च कालयवननामाऽसुरश्च संसूदितः । पला परा। कीर्तिः । प्रतता प्रकर्षेण व्याप्ता । कृतेति शेषः । पुनः कीर्तिं विमलेत्यादि विशेषणचतुष्टयेन विशिनष्टि । विमला निर्मला । विरता वि विशिष्टाः रमाब्रह्मादयः सुराः रताः यस्यां सा तथा । विश्वाधिपावनी विश्वेभ्यो भागीरथ्यादितीर्थेभ्योप्याधिक्येन पावयतीति तथोक्ता । विश्वं आधिक्येन पावयतीतिवा । ईलाविरता ईलः रलयोरभेदः ईरः मुख्यवायुः तेन आविः आविर्भूता प्रकटिता अता व्याप्ताचेत्यर्थः ईलाविश्चसा अताचेति विग्रहः ॥२८॥

मू० सत्याजांबवतीर्याः भार्या विंदाद्याःभानुसांबवतीर्याः ॥
प्रद्युम्नं मोदरतः प्राप ज्येष्ठं हरिः सुतं मोदरतः ॥२९॥

(पद०) सत्याजांबवतीर्याः । भार्याः । विंदाद्याः । भानुसांबवतीः । याः । प्रद्युम्नं । मोदरतः । प्राप । ज्येष्ठं । हरिः । सुतं । मोदरतः ॥२९॥

सत्येति । हरिः कृष्णः । याः सत्याजांबवतीर्याः सत्याजांबवत्यौ ईर्ये आर्ये यासां ता स्तथाभूताः । तृतीयोऽतिशय इति आकारस्थाने ईकारः । विंदाद्याः मित्रविंदाद्याः । भार्याः ताः प्राप । कथंभूताः । भानुसांबवतीः भानुः सत्यभामासूनुः सांबो जांबवतीसुतः एतदादिकपुत्र-

वतीत्यर्थः । **मोदरतः** मा रमारूपा रुक्मिणी तस्याः उदरतः । **प्रद्युम्नं** प्रद्युम्नाख्यं । **ज्येष्ठं सुतं** (च) प्राप । नन्वेवं विषयसापेक्षं हरेः सुखमित्यायातमत आह । **मोदरतः** रुक्मिण्यादि विषयासंबद्धे संमोदरूपे स्वस्मिन्नेवरत इत्यर्थः ॥२९॥

**मू० यत्परिवारतयेशा जाता देवा नृपात्मनाऽरतयेशाः ॥**
**यद्भरितं विषसर्पप्रभृतिध्वान्तं न मारुतिं विषसर्प ॥३०॥**

**(पद०) यत्परिवारतया । ईशाः । जाताः । देवाः । नृपात्मना । अरतयेशाः । यद्भरितं । विषसर्पप्रभृति । ध्वान्तं । न । मारुतिं । विषसर्प ॥३०॥**

**यत्परिवारतयेति । यत्परिवारतया** यस्य कृष्णस्य परिवारतया ( परि परितः वारयंतीति व्युत्पत्त्या शत्रुनिवारकतया श्रीकृष्णकार्याग सेवानिमित्तेनेति यावत् ) **ईशाः** सर्वलोकानामिति शेषः। **देवाः** शेषाद्याः । **नृपात्मना** क्षत्रियत्वेन । **जाताः** । कथंभूताः देवाः । **अरतयेशाः** अः परमात्मा तस्मिन् रतः अरतः याति सदा गच्छतीति यः मरुत् अरतश्चासौ यश्च अरतयः सईशो येषां ते तथोक्ताः । **यद्भरितं** येन कृष्णेन भरितं पूर्णं । **मारुतिं** भीमं । **विषसर्पप्रभृति** विषसर्पजलवह्निपूर्वकं । **ध्वांतं** तमः मारकं वस्त्विति यावत् । **न विषसर्प** न विससर्प न प्राप । यमकार्थं सस्य षत्वं । स हरिरिति पूर्वेणान्वयः ॥३०॥

**मू० येन हिडिंबबकाद्या रक्षोधीशा निपातिता बबकाद्याः ॥**
**भीमे प्रीतिममेयां व्यंजयता तेन शेषपाति ममेयां ॥३१॥**

**(पद०) येन । हिडिंबबकाद्याः । रक्षोधीशाः । निपातिताः । बबकाद्याः । भीमे । प्रीतिं । अमेयां । व्यंजयता । तेन । शेषपाति । ममे । यां ॥३१॥**

**येनेति । येन** कृष्णेन । **बबकाद्याः** बबकं मांसं अद्यं अदनयोग्यं येषां ते तथोक्ताः। बबकं मांसमज्जयोरित्यभिधानात् । **हिडिंबबकाद्याः** हिडिंबकिर्मीरपूर्वकाः। **रक्षोधीशाः** राक्षसेश्वराः। **तेन** भीमेन निमि-

तेन । **निपातिताः** निषूदिताः । ननु कृष्णेन राक्षसहनने भीमः कस्मा-न्निमित्तीकृतइत्याशङ्का परिहारायोक्तं **भीम इति** । **अमेयां** भीमादन्यत्र निर्मातुमयोग्यां । **प्रीतिं** । **व्यंजयता** अभिव्यक्ती कुर्वता । भीमस्य नि-मित्ततयाऽनुसरणे हि भीमेनैव रक्षोधीशा निपातिता इति लोके यशो-दानेन तस्मिन् प्रीतिः प्रकटिता भवतीति ज्ञातव्यं । प्रीते रमेयत्वं अज्ञे-यत्वं बाधितमतो विवृणोति **शेषपेत्यादिना** । **शेषपाति** शेषोऽनंतः पो रुद्रः गरुडो वा ताभ्यामतिशयो यथास्यात्तथा । **यां** प्रीतिं । **ममे** निर्ममे । तां प्रीतिमित्यन्वयः । अनेनान्यत्र मातुं ( निर्मातुं कर्तुं ) योग्या न भवतीत्यमेयेति पूर्वोक्तममेयत्वं प्रीतेर्विवृतमिति ज्ञातव्यं । यच्छब्दलब्धस्य स कृष्ण इत्यस्य उत्तरश्लोकेनान्वयः ॥३१॥

**मू० अथ कृष्णावरणेतान् प्राप्तान् राज्ञोऽश्रुणोत्सदावरणेतान् ॥**
**द्रष्टुं यातस्सबलस्तांचानैषीत्पृथासुतांस्ततः सबलः ॥३२॥**

**(पद०) अथ । कृष्णावरणेतान् । प्राप्तान् । राज्ञः । अश्रृणोत् । सदावरणेतान् । द्रष्टुं । यातः । सबलः । तां । च । अनैषीद् । पृथा-सुतान् । ततः । सबलः ॥३२॥**

**अथेति** । **अथ** अनंतरं । **राज्ञः** । **कृष्णावरणेतान्** कृष्णायाः द्रौपद्याः वरणेन वरत्वेच्छया इतान् युक्तान् । **प्राप्तान्** द्रौपदीवरणाय प्राप्तान् सतः । **अश्रुणोत्** । कथंभूतान् राज्ञः । **सदावरणेतान्** सत्सुविषये ( पाण्डवविषये ) आवरणमज्ञानं तेन इतान् युक्तान् । सन्तो भीमाद्या-बलाधिकास्तेभ्योऽस्माकं मानभंगो भविष्यतीति ज्ञानवर्जितानिति यावत् । **सबलः** बलरामेण सहितः । सः कृष्णः । **पृथासुतान्** । **तांच** कृष्णांच । **द्रष्टुं** द्रष्टुमेव । **यातः** प्राप्तः । **तां** कृष्णां । **पृथासुतान्** प्रति । **अनैषीत्** प्रापितवान् । ( तां चानैषीत् पृथासुतानित्यावर्तते ) तां पृथासुतांश्च । **ततः** पांचालपुरात् । **सबलः** सवरः आशीर्वादरूपं वरं दत्वेति यावत् । **अनैषीत्** गजाह्वयं पुरं प्रतीति शेषः ( अनेन श्रीकृष्णस्य पाण्डवेषु सार्व-कालिकी निरुपाधिकप्रीतिः सूचिता भवति ) ॥३२॥

मू० तानिन्द्रस्थलवासांश्चक्रे कृष्णः परो निजस्थलवासान् ॥
स्वबलोद्रेचितमानैर्जुगोप धर्मं च तैः पराचितमानैः ॥३३॥

(पद०) तान् । इन्द्रस्थलवासान् । चक्रे । कृष्णः । परः । निजस्थलवासान् । स्वबलोद्रेचितमानैः । जुगोप । धर्मं । च । तैः । पराचितमानैः ॥३३॥

तानिति । कृष्णः । तान् पृथासुतान् । इन्द्रस्थलवासान् इन्द्रस्थले इन्द्रप्रस्थे वासो येषां ते तथोक्ताः तान् चक्रे । कथंभूतः कृष्णः । परः सर्वोत्तमः तस्याशक्यं न किमपीति भावः । कथंभूतान् तान् । निजस्थलवासान् निजेषु भृत्यरूपेषु स्वेषु स्थः संस्थितः यः लवः रवः आज्ञारूपः शब्दः तत्रैव असान् विद्यमानान् स्वविषयकहर्याज्ञानुसारेण प्रवर्तमानानिति यावत् । अथवा निजानां स्वपूर्वेषां स्थं स्थितं यद्राज्यं तस्य लवे लेशे एकदेशे अर्ध इति यावत् तत्र असान् इत्यर्थः । ( तत्र वसत इति यावत ) स्वपितृराज्यार्धराज्यस्थितांश्चक्र इति भावः । तैः पार्थैर्निमित्तैः । धर्मं जुगोपच रक्षितवान् (ररक्षापि) । कथंभूतैः स्वबलोद्रेचितमानैः स्वः कृष्णः तस्य बलेन उद्रेचितं अभिवृद्धं मानं सन्मानं अखिलराजवन्द्यत्वादिरूपं येषां ते तथोक्ताः तैः । पुनःकथंभूतैः पराचितमानैः परैः उत्तमैः शत्रुभिर्वा आचितं सम्यक्कृतं मानं सन्मानं येषां ते तथोक्ताः तैः ॥३३॥

मू० वालिवधानुनयाय प्रणयी सख्यं सुसंदधे नु नयाय ॥
वासवजेन विशेषात्तेनैव पुनर्नृजन्मजेन विशेषात् ॥३४॥

(पद०) वालिवधानुनयाय । प्रणयी । सख्यं । सुसंदधे । नु नयाय । वासवजेन । विशेषात् । तेन । एव । पुनः । नृजन्मजेन विशेषात् ॥३४॥

ननु कृष्णो विशेषेणार्जुनसखः कस्माज्जात इत्यतस्तत्र कारणम वालिवधेति । प्रणयी भक्तवत्सलः कृष्णः । वालिवधानुनयाय अप धाभावेपि मया वालिवधः कृत इति यः पश्चात्तापः (चित्ततोदः) स

बालिवधशब्देन लक्ष्यते तस्य अनुनयः परिहारः तस्मै । ( बालिनः वधः यस्मै सः बालिवधः सुग्रीवः तस्य अनु अनंतरं कर्णजन्मनि नयाय परित्यागार्थैव) विशेषात् धर्मनकुलसहदेवापेक्षया विशेषेण । वासवजेन अर्जुनेन । सख्यं सखित्वं । नु इदानीं कृष्णावतारे । सुसंदधे अतिदृढतयाऽनेकप्रकारेण कृतवानित्यर्थः । नन्विदं व्यधिकरणं बालिनोऽर्जुनस्य भिन्नत्वादित्याशंका परिहारायोक्तं पुनर्नृजन्मजेनेति । नृजन्मना अर्जुनतया जेन जातेन । तेनैव बालिनैव । अनेन य इन्द्रांशः पूर्वं बालितया जातः स एवेदानीमर्जुनतयोत्पन्नः । अतो नोक्तशंकेत्युक्तं भवति । ननु प्रत्यवाय गंधविधुरस्य भगवतः कथं चित्ततोदः येन तत्परिहारायार्जुनसख्यकरणमुपपन्नं स्यादित्यत उक्तं नयायेति । नयाय लोके नीतिप्रदर्शनायेत्यर्थः । ननु भगवतोपि चेतनत्वादितरचेतनवत्प्राप्तप्रत्यवायशंकाजनितचित्ततोदः संभावितःकिंनस्यादित्यत उक्तं विशेषादिति । विशेषात् विर्गरुडःशेषोऽनंतः उपलक्षणमेतत् तावत्तीति सः ( वि विशेषेण शेषस्य उपसर्जनभूतस्य ब्रह्मादिसमुदायस्य अत् अत्ता ) तथाच प्रलयकाले अपराधाभावेऽपि सकल प्राणिहिंसकस्य श्रीनृसिंहात्मनः श्रीकृष्णस्य प्रत्यवायजनितचित्ततोदः असंभावित एवेति भावः ॥३४॥

मू० मातुः परिभवहान्यै राज्ञा द्युसदापितश्च परिभवहान्यै ॥
अभवन्नरकमुरारिर्योवात्सीदत्समस्तनरकमुरारिः ॥३५॥

(पद०) मातुः । परिभवहा । अन्यैः । राज्ञा । द्युसदां । इतः । च । परिभवहान्यै । अभवत् । नरकमुरारिः । यः । अवात्सीत् । अत्समस्तनरकं । उरारिः ॥३५॥

मातुरिति । अत्राद्यपादे परिभवहा अन्यैरिति पदच्छेदः । द्युसदां द्यौः स्वर्गः सत् सदनं येषां तेषां देवानां । राज्ञा इन्द्रेण । मातुः स्व मातुः अदित्याः । परिभवहान्यै नरकेण हि अदित्याः कुण्डलापहारेण परिभवःकृतः तत्कृतपरिभवनाशाय । अन्यैश्च मुनिभिश्च । इतःशरणंप्राप्तः। परिभवहा परितोभवः परिभवः संसारस्तस्यहंता श्रीकृष्णः । नरकमुरा-

रिः नरकश्च मुरश्च तौ तथा तयोररिः विनाशकः । अभवत् । य उरा-
रिः इकारस्थाने उकारः तृतीयोऽतिशय इति वचनादतिशयार्थः (द्वयोरपि
रवर्णयोर्लत्वं विवक्षितं । ळळयोरभेदश्च । )तथाच इळा भूमिः आळिर्भार्या
यस्य स इळाळिः वराहरूपस्य हरेः भूदेवता धरा भार्या प्रसिद्धा तदभि-
प्रायेणेदं । अथवा भूसंज्ञकरमावतारभूता सत्यभामा इळाशब्देन ग्राह्या ।
सा इळा आळिर्भार्या यस्येत्यर्थः । सत्यभामापतिः कृष्णः । अत्समस्त-
नरकं अत् अतं व्याप्तं समस्तं स्वमाहात्म्यं तेन नराणां ज्ञानिनां कं मनः
द्वितीया सप्तम्यर्थे मनसि । अवात्सीत् अवसत् । उक्तमाहात्म्यवत्तया
सकलज्ञानिध्येयोऽभवदिति भावः ॥३५॥

मू० नीतो दिवि देववरैरेमे सत्यासमन्वितोऽदेववरैः ॥
सर्वर्तुवने शशिना निशि सत्यां वासरे वनेऽशशिना ॥३६॥

(पद०) नीतः । दिवि । देववरैः । रेमे । सत्यासमन्वितः ।
अदेववरैः । सर्वर्तुवने । शशिना । निशि । सत्यां । वासरे । वने
अशशिना ॥३६॥

नीत इति । देववरैः देवश्रेष्ठैः । इन्द्रादिभिर्दिवंप्रति । नीत
(सन्) । दिवि स्वर्गे । सत्यासमन्वितः सत्यभामासमन्वितः । रेमे
कथंभूतैर्देववरैः । अदेववरैः अदेवा असुराः तेभ्योवैरुच्चवलैः । यद्वा
अश्चासौ देवश्च अदेवो हरिः स वरो वरणीयो येषां ते तथोक्तैः । स्वर्गे
रमणस्थळविशेषमाह सर्वर्तुवनइति । सर्वर्तुवने अत्र ऋतुशब्देन तत्का
लक्ष्यते । तथाच सर्वर्तुसंपद्भिर्वने वननीये सेव्ये । वने नन्दनाख्ये वने
निशि । रेमइत्यन्वयः । ननु निशि प्रकाशाभावेन कथं रमणमित्यत उक्तं
शशिना चन्द्रेण । निशि रात्रौ । वासरे दिवासमायां । सत्यां । ननु श
रूपकलंकोपेतेन शशिना कथं निशा दिवासमा जातेत्यत उक्तं अशशि
नेति । शशोऽस्यास्तीतिशशी नशशी अशशी तेन निष्कलंकेनेति याव
नंदनवनस्यालौकिकत्वाद्यथा तत्र युगपत्सर्वर्तुसंपत्तिस्तथा चन्द्रोप्यशशी
प्रकाशते । अतस्तत्र निशायामंधकारलेशाभावाद्दिवा समता युक्तेति

वः । ( श्लोकरूप ) पूर्वटीकायांतु अशशिना शशिभिन्नेन भानुना वासरे सत्यामिति व्याख्यातं ॥३६॥

मू० सुरतरुमापाळिमतात्प्रकाशयन् शक्तिमात्मनः पाळिमतात् ॥
सुरवरवीरेषु दरी प्रधानजीवेश्वरः परेषुदरी ॥३७॥

(पद०) सुरतरुं । आप । आळिमतात् । प्रकाशयन् । शक्तिं । आत्मनः । पाळिमतात् । सुरवरवीरेषु । दरी । प्रधानजीवेश्वरः । परेषुदरी ॥३७॥

सुरतरुमिति । दरी शंखवान् ध्मातशंखः कृष्णः । सुरवरवीरेषु सुरवराश्चते वीराश्च तेषु । आत्मनः स्वस्य । शक्तिं । प्रकाशयन् । आळिमतात् आळिः सखी भार्या सत्यभामा तस्याः मतात् ल्यब्लोपनिमित्ता पंचमी अभिप्रायमनुसृत्य । सुरतरुं पारिजातं । आप प्राप नीतवान् । कथंभूतःकृष्णः । पाळिमतात् ळस्य लत्वं विवक्षितं । पालाः लोकपालाः अस्य सन्तीति पाली इन्द्रः तस्य मतं अभिप्रायं अत्तीति पालिमतान् इन्द्राभिप्रायनाशक इतियावत् । पुनःकथंभूतः । प्रधानजीवेश्वरः प्रधानपदं जडमात्रपरं तथाच सर्वेषां जडानां जीवानांचेश्वरइत्यर्थः । इदंच स्वकीयमेव स्वेन नीतमिति प्रदर्शनाय । पुनःकथंभूतः । परेषुदरी परे प्रतिभटाः तेषामिषवो बाणाः ( इषुपदोपलक्षितनानाविधायुधानि ) तेषां दरः दारणमस्यास्तीति तथोक्तः । अनेन सर्वेपि देवास्तत्र पराजिता इति सूचयति ॥३७॥

मू० पुरमभियायारिदरी दत्वा भद्रां पृथासुतायारिदरी ॥
शक्रपुरीमभियातः प्रादाद्वह्नेर्वनं सतामभियाऽतः ॥३८॥

(पद०) पुरं । अभियाय । अरिदरी । दत्वा । भद्रां । पृथासुताय । अरिदरी । शक्रपुरीं । अभियातः । प्रादात् । वह्नेः । वनं । सतां । अभिया । अतः ॥३८॥

पुरमिति । ( शक्रपुरीमभियात इत्यस्य, वह्नेस्सतामभियातइत्यस्य चावृत्तिः ) । सकाशादिति शेषः । अरिदरी अरिः चक्रं दरः शंखः ताव

स्य स्त इति अरिदरी चक्रशङ्खधरः कृष्णः । पुरं द्वारकां । अभियाय पुनरागतः । पृथासुताय पार्थाय । भद्रां सुभद्रां स्वावरजां । दत्वा । अरिदरी अत्र अरिशब्देन अरिकामो लक्ष्यते । अरेः अरिकामस्य सुभद्राविषयक दुर्योधनकामस्य दरः दारणमस्यास्तीति अरिदरी दुर्योधनकामदारणवानित्यर्थः । दुर्योधनस्यहि सुभद्रायां कामोऽभूत् । शक्रपुरीं इन्द्रप्रस्थं । अभियातः प्रयातस्सन् । वह्नेः । वनं खाण्डवाख्यं । प्रादात् । कथं । सतां जरितार्यादीनां । अतः वह्नेः । अभिया भयाभावेन । जरितार्यादीन् वह्निमुखाद्रक्षयित्वेत्यर्थः । यद्वा सतां युद्धार्थमागतानां इन्द्रादीनां सकाशात् । अतः अस्यवह्नेः । अभिया भयाभावेन तान् तुच्छीकृत्येति यावत् । शक्रपुरीमभियात इत्यर्थः ॥३८॥

मू० शिवभक्तप्रवराद्यं पुमान्नसेहे गिरीशविप्रवराद्यम् ॥
तं स्वात्मेन्द्रवरेण व्यधुनोद्भीमेन धूतरुद्रवरेण ॥३९॥

(पद०) शिवभक्तप्रवराद्यं । पुमान् । न । सेहे । गिरीशविप्रवरात् । यं । तं । स्वात्मेन्द्रवरेण । व्यधुनोत् । भीमेन । धूतरुद्र वरेण ॥३९॥

शिवभक्तेति । ( अरिदरीति कर्तृपदमनुवर्तते । कोपीति शेषः ।) शिवभक्तप्रवराद्यं शिवभक्तानां ये प्रवराः तेषामाद्यं आद्यतया गणनीयं । यं जरासन्धं । गिरीशविप्रवरात् गिरीशो रुद्रः विप्रः दुर्वासाः तयोर्वरात् । ( कोपि ) पुमान् कोपि पुरुषः । नसेहे सोढुंशक्तोनाऽभूत । तं तादृशं जरासन्धं । स्वात्मेन्द्रवरेण स्वात्मा स्वयं इन्द्रः स्वामी येषांते स्वात्मेंद्राः स्वभृत्याः वैष्णवाः तेषां वरेण श्रेष्ठेन भीमेन निमित्तेन । अरिदरी श्रीकृष्णः । व्यधुनोत् जघान । ननु रुद्रवररक्षितं भीमः कथं जघानेत्यत उक्तं धूतरुद्रवरेणेति । धूतरुद्रवरेण धूतः तिरस्कृतः रुद्रवरः येनसतथोक्तः तेन । हिडिंबादिवधे रुद्रवरस्य तिरस्कृतत्वादत्रापि तथेति भावः ननु भीमस्य रुद्रवरतिरस्कारः कथमित्यत इदमेवोत्तरं धूतः कंपितः पराजित इतियावत् । सचासौ रुद्रश्च तस्माद्वरेण श्रेष्ठेनेति । भीमेन हि बह

शो रुद्रःपराजितः अतस्तदपेक्षया भीमो वरः अतस्तद्वरहंतृत्वमस्य युक्तमेवेति भावः ॥३९॥

**मू० यस्याज्ञाबलसारैः पार्थैर्दिग्भ्यो हृतं धनं बलसारैः ॥**
**जित्वा क्ष्मामविशेषां प्रसह्य भूपान् समस्तकामविशेषां ।४०।**

**(पद०) यस्य । आज्ञाबलसारैः । पार्थैः । दिग्भ्यः । हृतं । धनं । बलसारैः । जित्वा । क्ष्मां । अविशेषां । प्रसह्य । भूपान् । समस्तकामविशेषां ॥४०॥**

**यस्येति । यस्य** कृष्णस्य । **आज्ञाबलसारैः** आज्ञया बलेन चतुरंगेणच सारैः सारवद्भिः । (आज्ञया बलं आज्ञालब्धस्ववीर्यं तेन सरन्ति निस्सरन्ति सारयन्तिवा शत्रूनिति तथातैः) **बलसारैः** बलं सारः स्वरूपं येषांतैः । **पार्थैः । दिग्भ्यः । धनं** वसु । **हृतं** आहृतं । किं कृत्वा । **क्ष्मां** भूमिं । **अविशेषां** अशेषां । **जित्वा** सामस्त्येन वशीकृत्य । पुनःकथंभूतां । **समस्तकामविशेषां** सकलेप्सितविशेषवतीं । (समस्तकामाःमोक्षेतरसर्वकामाः तेषां विशेषा अतिशयाः यस्यां सा तां ) ननु भूपालानविजित्य कथं भुवो वशीकरणमित्यत उक्तं । **भूपान् प्रसह्य जित्वेति** । (यस्येति यच्छब्दस्य स अमरेडित्युत्तरश्लोकेनान्वयः) ॥४०॥

**मू० अथ पार्थान् क्रतुराजं प्रापयदमरेट् सरुद्रशक्रतुराजं ॥**
**पूजा तेनात्रापि छिन्नश्चैद्यः स्मृतिं गतेनात्रापि ॥४१॥**

**(पद०) अथ । पार्थान् । क्रतुराजं । प्रापयत् । अमरेट् । सरुद्रशक्रतुराजं । पूजा । तेन । अत्रापि । छिन्नः । चैद्यः । स्मृतिं । गतेन । अत्रापि ॥४१॥**

अथेति । **अमरेट्** सर्वदेवेशः श्रीकृष्णः । **अथ** दिग्विजयानंतरं । **पार्थान्** धर्मराजादीन् । **क्रतुराजं** राजसूयसहितं परमाश्वमेधाख्यं यज्ञश्रेष्ठं । **प्रापयत्** प्रापयामास । कथंभूतं क्रतुराजं । **सरुद्रशक्रतुराजं** रुद्रः शिवः शक्रः देवेन्द्रः तुगो वायुः अजो ब्रह्मा तैस्सहितस्तथोक्तस्तं । परिवारतयापूज्यब्रह्मादि देवताकमित्यर्थः । **तेन** कृष्णेन । **पूजा** अग्रपूजा । **अत्रापि**

प्राप्ता । चैद्यः शिशुपालः । छिन्नः चक्रेण हतः । अमरेट् तेनेत्यावर्तते । तथाच । अमरेट् श्रीकृष्णः । सृतिंगतेन अमुक्तेनापि । तेन चैद्येन तदा-विष्टजयेन । अत्रापि प्राप्तः । सृतिरहितैरेव भगवान् प्राप्यः । अयंतु सृ-तिस्थोपि तं प्रापेत्याश्चर्यमिति भावः । पूर्वटीकायांतु सृतिं गते स्वभृत्ये तत्तारणाय नावा नौस्थानीयेन तेन कृष्णेनेति व्याख्यातं । तत्र अपिश-ब्दस्योत्तरश्लोकेनान्वयः । सौभकरूशावपि तेन निहताविति ॥४१॥

**मू० निहतौ सौभकरूशौ शीतो भातश्च येन तौ भ(भा)करूशौ ॥**
**अजयद्रुद्रं च रणे बाणार्थेऽवनतिपतितकचन्द्रं चरणे ॥४२॥**

**(पद०) निहतौ । सौभकरूशौ । शीतः । भातः । च । येन । तौ । भकरूशौ । अजयत् । रुद्रं । च । रणे । बाणार्थे । अवनतिपतितक-चन्द्रं । चरणे ॥४२॥**

**निहताविति** । येनेति यच्छब्दबलात्तेनेति लभ्यते । **सौभकरूशौ** सौभः साल्वः करूशः दन्तवक्रः तौ । **तेन** कृष्णेन । **निहतौ** । यदा-साल्वेन युद्धं कृतं तदा कृष्णस्तन्मायया मोहितइति भारतादौ कथ्यते । तदसुरजनमोहनार्थैवेत्याशयेन चन्द्रसूर्योपलक्षितसर्वदेवप्रवर्तकत्वरूपं महत्त्वं तस्याह **शीतइत्यादिना** । यः **शीतः** चन्द्रः यः **भातश्च** कर्तरिक्तः भा-सकः सूर्यश्च तौ । **येन** यत्प्रेरणया । **भ (भा) करूशौ** । जाताविति शेषः । चन्द्रः भकः भासकः जातः । सूर्यः रूशः आधिक्येन कान्तिमान् जात इत्यर्थः । किञ्च यस्य रुद्रस्य वरात्साल्वादयो बलोन्मत्ताः तं रुद्रं च रणे योऽजयत् तस्य मोहोऽसम्भावितएवेत्याशयेनाह **अजयदिति** । यः **रुद्रंच** । **रणे** बाणासुरयुद्धे । **अजयत्** । कथंभूतंरुद्रं । **बाणार्थे** बा-णासुररक्षणार्थं । **चरणे** चरणयोः । **अवनतिपतितकचन्द्रं** अवनतिर्भ-क्तिपूर्वकप्रणामः तया पतितः कचन्द्रः शिरोगतचन्द्रो यस्यस तथोक्तः तं । अनेन रुद्रेण शिरःसंयोगमात्रं नकृतं किंतु भक्तिदार्ढ्येण चरणे शिर-स्संघट्टनमेव कृतमिति सूचयति । न केवलं कृष्णो रुद्रं जितवान् अपितु बाणरक्षणेच्छया तेन प्रणतश्च अतस्तस्य मोहोऽसंभावित एवेति भावः ॥

मू० असृजज्ज्वरमुग्रतमःक्षयप्रदो लीलयाऽधिवरमुग्रतमः ॥
क्रीडामात्रं विश्वं प्रकाशयन्नात्मनः सविहरकमात्रं विश्वं ।४३।

(पद०) असृजत् । ज्वरं । उग्रतमःक्षयप्रदः । लीलया । अधिवरमुक् । रतमः । क्रीडामात्रं । विश्वं । प्रकाशयन् । आत्मनः । सविहरकमात्रं । विश्वं ॥४३॥

असृजदिति । ( कृष्ण इति शेषः ) शिवभृत्योज्वरः बाणासुरपुररक्षणाय शिवेन नियोजितः । तज्जयाय **ज्वरं** वैष्णवं ज्वरं । **लीलया** क्रीडयैव । **असृजत्** । कृष्ण इत्यर्थः । कथंभूतः कृष्णः । **उग्रतमःक्षयप्रदः** उग्राः दैत्याः तेषां तमसि क्षयो निवासस्तस्यप्रदः । अनेन बहवो बाणभृत्या हता इति सूचयति । उग्रो रुद्रः तदज्ञाननाशप्रद इतिवा । पुनः कथंभूतः । **अधिवरमुक्** बाणपुत्र्याः उषायाः अधिकोवरः अनिरुद्धः तं मोचयतीति तथोक्तः । बाणबद्धानिरुद्धमोचकइत्यर्थः । बाणयुद्धमध्ये भगवता कृष्णेन यदशक्त्यादिकं प्रदर्शितं तन्मोहकमेवेत्याशयेन तस्य माहात्म्यमाह **रतम इति** । रता मा रमा यस्मिन्निति स रतमः । रमाया अपि रतिप्रद इत्यर्थः । **विश्वं** सर्वं । **विश्वं** जगत् । **आत्मनः** स्वस्य । **क्रीडामात्रं** क्रीडया मातं निर्मितं त्रातं रक्षितञ्च । **प्रकाशयन्** । लीलयाज्वरमसृजदित्यन्वयः । कथंभूतं विश्वं । **सविहरकमात्रं** विः गरुडः हरो रुद्रः कः प्रजापतिः मात्रशब्दः कार्त्स्न्यार्थकः प्रत्येकमभिसंबध्यते । कृत्स्नाश्चते विहरकाश्च विहरकमात्राः तैस्सहितं तथाचातीतानागतवर्तमानाः ये गरुडरुद्रप्रजापतयः तैस्सहितमित्यर्थः । यद्वा सइति भिन्नं पदं । **सः** कृष्णः । प्रतिज्वरविसर्जने भगवतोऽभिप्रायमाह क्रीडामात्रमिति । विहरकमात्रं विहरकैः गरुडरुद्रविरिञ्चैः मात्रं निर्मितं रक्षितञ्चेत्यर्थः । विश्वं स्वस्य क्रीडामात्रं क्रीडयैव निर्मितं त्रातञ्च । ब्रह्मादिनिर्मितमपीदं विश्वं मदधीनमेवेति दर्शयन्निति भावः ॥४३॥

मू० यस्यावेशोरुबलान्न्यहनत्पार्थोऽसुरान्प्रजेशोरुबलान ॥
वरदानादस्यैव जगत्प्रभोरीरणात्समनुगतनादस्यैव ॥४४॥

(पद०) यस्य । आवेशोरुबलात् । न्यहनत् । पार्थः । असुरान् । प्रजेशोरुबलान् । वरदानात् । अस्य । एव । जगत्प्रभोः । ईरणात् । समनुगतनादस्य । एव ॥४४॥

यस्येति । यस्य कृष्णस्य । आवेशोरुबलात् आवेशनिमित्तकोत्कृष्टसामर्थ्यात् । पार्थः अर्जुनः । प्रजेशोरुबलान् प्रजेशा रुद्राद्याः तेषां उरुः उत्कृष्टः बलो वरो येषांते तथा तान् । असुरान् निवातकवचादीन् । न्यहनत् जघान । नकेवलमावेशबलात् किन्तु अस्य कृष्णस्य । वरदानादेव " यावद्भूमावहं तावन्नामुञ्चेष्यति कश्चनेति " वरादेवेत्यर्थः । अन्यदपिनिमित्तमाह समनुगतनादस्य । जगत्प्रभोरीरणादेवेति । संमुख्ययावृत्त्याऽनुगतो वाचको नादः शब्दो यस्यस तथा । तस्य पार्थशब्दमुख्यवाच्यस्य जगत्प्रभोरन्तर्यामिणः प्रेरणादेव चेत्यर्थः । इदमुपलक्षणं । बलभीमादयोपि बलभीमादिशब्दमुख्यवाच्यस्य स्वांतर्यामिणः कृष्णस्य प्रेरणादेवासुरान् न्यहनन्नित्यपि ग्राह्यं । उक्तंहि " बलभीमपार्थव्याजाह्वयेन हरिणा निलयं तदीयमिति " तथाच भीमादिकृतमसुरहननादिकं कर्म कृष्णेनैव तदन्तर्यामिणाकृतं । ते तु तत्र निमित्तमात्रभूताइति भावः ।४४।

मू० यस्यावेशात्सबलः प्रचकर्ष पुरं प्रसह्य चेशात्सबलः ॥
कुरुपतिनाम नु यमुनाऽऽकृष्टा येनाहुरर्घ्यमतनु यमुना ।४५।

(पद०) यस्य । आवेशात् । सः । बलः । प्रचकर्ष । पुरं । प्रसह्य । च । ईशात् । सबलः । कुरुपतिनाम । नु । यमुना । आकृष्टा येन । आहुः । अर्घ्यं । अतनु । यं । उना ॥४५॥

एतदेवदर्शयति यस्येति । सः प्रसिद्धः । बलः बलभद्रः । यस्य कृष्णस्य । आवेशात् ( शुक्लकेशरूपेण प्रवेशात् ) कुरुपतिनाम कुरुपतिर्हस्तिनामा नृपः तस्य नाम यस्य तत्तथा हस्तिनामवत् । अतनु महत् । पुरं । प्रसह्य हठात् ( लांगलाग्रेण ) । प्रचकर्ष । नु अनन्तरं । ईशात् तत्पुरेशात् दुर्योधनात् । सबलः सवरः दुर्योधनसुतायाः लक्षणायाः यो वरः सांबः तेन सहितः । चशब्दोऽनुक्तसमुच्चयार्थः । तथाच

पूजां प्राप्य ययाविति तदर्थो ज्ञातव्यः । यद्वा पूजां प्राप्य ययावित्यध्याहारः । चशब्दस्योत्तरत्रान्वयः । नु अनंतरं (गोकुले) । येन बलभद्रेण । यमुनाच आकृष्टा । यं बलभद्रं । उना रुद्रेण । अद्य्यं पूज्यं । आहुः । वैदिकाइति शेषः । यच्छब्दस्य पूर्वेण सइत्यनेनान्वयः । अनेन बलराम सामर्थ्येनैव नागपुरयमुनाकर्षणादिकं न कृतं । किंतु तदंतर्यामिकृष्णेन कृतं रामस्तु निमित्तभूत इति सूचयति ॥४५॥

मू० यद्बलवान् क्रोधवशान्निनाय नाशं वृकोदरः क्रोधवशान् ॥
लेभेऽचान्यागम्यं स्थानं पुष्पाणि धाम चान्यागम्यं ॥४६॥

(पद०) यद्बलवान् । क्रोधवशात् । निनाय । नाशं । वृकोदरः । क्रोधवशान् । लेभे । अचान्या । गम्यं । स्थानं । पुष्पाणि । धाम । च । अन्यागम्यं ॥४६॥

यद्बलवानिति । (लेभे इत्यावर्तते) । यद्बलवान् यस्य कृष्णस्य बलवान् वरवान् अनुग्रहवानित्यर्थः । क्रोधवशात् एते हरिद्रोहिण इति कोप दोषवशात् । वृकोदरः भीमसेनः । क्रोधवशान् तन्नामकासुरान् । नाशं । निनाय प्रापितवान् । अचान्या जकारस्थाने चकारः तृतीयोऽतिशयार्थः अजान्या भाविब्रह्माण्येति यावत् द्रौपद्या । उक्त इति शेषः । गम्यं । स्वेनैवेति शेषः । स्थानं सौगन्धिकपुष्पस्थानं । लेभे प्राप । तत्र पुष्पाणिच लेभे । ततः अन्यागम्यं धाम । कुबेरस्येति शेषः । लेभे ।४६।

मू० यद्बलभारवहत्वान्नाचलदुरगादिभिः सुभारवहत्वात् ॥
धर्मादरिहाऽपि पदं भीमो येनैव साहसं रिहाऽपि पदं ॥४७॥

(पद०) यद्बलभारवहत्वात् । न । अचलत् । उरगादिभिः । सुभारवहत्वात् । धर्मात् । अरिहा । अपि । पदं । भीमः । येन । एव । साहसं । रिहा । अपि । पदं ॥४७॥

यद्बलेति । (नाचलदित्यस्य अपिपदस्यचावृतिः) । भीमः । यद्बलभारवहत्वात् यस्य कृष्णस्य बलो वरः आज्ञारूपः अस्मिन् समये भीमसेनैवमेव स्थातव्यमितितत्कालीनसंकल्पइतियावत् स एव भारः तद्वह-

त्वात् । **उरगादिभिः** उरगरूपनहुषधर्मद्रौणिभिः । बद्धोपीतिशेषः । **पदं** पादमात्रं । **नाचलत्** । **सुभारवहत्वात् धर्मादपि** (नाचलत्) सुभा शोभनाकान्तिः अध्ययनजनितं तेजः तत्रैव रः रतिः अन्यत्रोपयोगरहिताऽऽसक्तिरितियावत् । तं वहतीति वहः तस्यभावस्तत्वं तस्मात् तल्लक्षणधर्मादपीत्यर्थः । **नाचलत्** । क्षत्रियस्य विद्यासंपादिततेजसोऽन्यत्र स्वजीवनादौ व्ययाकरणं मुख्यधर्मः अतस्तद्वहत्वान्नहुषधर्मकृतप्रश्नपरिहारेण नारायणास्त्रनमनेन च स्वात्मविमोक्षणं नैच्छदिति भावः । ननु कुत एवं कल्प्यते । अशक्तएव नाचलदिति किंनस्यादित्यत उक्तं **अरिहापीति** । वैरिहनने शक्तोपीत्यर्थः । एतच्चोत्तरश्लोके स्पष्टयिष्यति । ननु शक्तोपि हरिसंकल्पवशात् नाचलदिति नयुक्तं । तथात्वे 'नैतादृशं साहसं तेऽनुरूपमिति' भीमं प्रति मुनिवचनानुपपत्तेः । योहि बलाबलमजानन् किंचित्करोति तत्रैव साहसपदं प्रयोक्तव्यमित्याशंकायामाह **साहसमिति** । सहः वायुः तत्संबन्धि साहसं तदभिमन्यमानं नहुषगतधर्मजातं । **रिहैव** लिप्सतैव रस्यलत्वं । आदातुमिच्छतैव । **येन** भीमेन । **पदं** साहसमिति पदं मुन्यादिलोकोक्तं । **आपि** प्राप्तं । नत्वशक्तेनेत्यर्थः । तथाच भीमाभिप्रायमजानाद्भिरेव मुनिभिः भ्रमेण तथोक्तमिति भावः ॥४७॥

**मू० नहि नहुषोऽलं नहितुं धर्मो द्रौणिस्तथेतरोऽलं नहितुं ॥**
**नोराट्कर्णो ब्रह्मवरी येन ध्वस्तोऽस्त्रमग्रहीत्सब्रह्मवरी ॥४८॥**

(पद०) न । हि । नहुषः । अलं । नहितुं । धर्मः । द्रौणिः । तथा । इतरः । अलं । नहितुं । नो । राट् । कर्णः । ब्रह्मवरी । येन । ध्वस्तः । अस्त्रं । अग्रहीत् । सः । ब्रह्म । वरी ॥४८॥

नहुषादीनां भीमोपेक्षयैव बन्धकत्वं न स्वसामर्थ्येनेत्याह **नहीति** । यथेति सिध्यति । भीममिति शेषः । (यथा) **इतरः** उपेक्षाऽभावकालीनो दुर्योधनादिः । (भीमं) । **नहितुं** बद्धुं । **नोऽलं** न समर्थः । **तथा** उपेक्षाकालीनोपि । **नहुषो** वा । **धर्मो** वा । **द्रौणिर्वा** । तं भीमं । **नहितुं** । **अलं** समर्थः । **नहि** स्वसामर्थ्येन बद्धुं शक्तो नेत्यर्थः । हिशब्देन पूर्व-

प्रसिद्धयद्बलभारवहत्वादिति हेतुं स्मारयति । नान्वितरो नहितुं नालमित्युक्तं तत्कुतो ज्ञायत इत्यतस्तेन तल्लयस्यैव कृतत्वात्तदनुमेयमित्याशयेनाह रा-डिति । राट् दुर्योधनादिदुष्टराजसमुदायः । (ब्रह्मवरी परशुरामवरवान् ) कर्णः । ब्रह्मवरी ब्रह्मवरवान् जरासन्धश्च । येन भीमेन । ध्वस्तः जितः । अर्जुनस्य कर्णवधे भीम एवोपजीव्य इत्याशयेन कर्णोपि ध्वस्तइत्युक्तम् । परशुरामवरगौरवस्यापि रक्षणायैव भीमेनोपेक्षितः कर्णः तं बबन्धेति दर्शयितुं कर्णग्रहणं । ननु द्रौणेर्नहुषादिवत् उपेक्षितस्यैव बन्धकत्वं नस्वत इत्युक्तं । तदयुक्तं । युद्धे प्रतिवीरतयास्थितस्योपेक्षायोगात् । राजादिवद्‌ली-नत्वाच्च नतस्य स्वबन्धकत्वं ज्ञात्वोपेक्षितुं शक्यतइत्यत आह । वरी बली । ब्रह्म ब्राह्मणजातिः । सः द्रौणिः । पराजितस्सन् इति शेषः । अस्त्रं ब्रह्मास्त्रं । अग्रहीत् असृजत् । अयं भावः । युद्धे दुर्योधनादिरिव द्रौणिर्न भीमेन हतः ब्राह्मणवधस्य गर्हितत्वात् किंतु पराजितएवसन् पाण्डववंशप्रणाशाय ब्रह्मास्त्रमसृजत् तदाभीमस्तेन ब्रह्मास्त्रेण द्रौणिमुपेक्ष्यास्त्रदेवताभूतविष्णुगौ-रवेणैव बद्धवत्स्थितः अतो युद्धगतोपि द्रौणिः विष्णुबलभारवहेन भीमे-नोपेक्षितस्सन् तं बबन्ध नस्वसामर्थ्येनेति ज्ञायत इति । (सुब्रह्मवरीतिपाठे सुब्रह्मवरीत्येकं पदं । सु सर्वोत्तमं ब्रह्म हरिः तस्यवरः उत्तमः संकल्पः अस्मिन् समये भीमेनैवमेव स्थातव्यमिति तत्परिज्ञानवान् भीमः अस्त्रं द्रौण्यस्त्रं अग्रहीदित्यर्थः) ॥४८॥

मू० क्षात्रं धर्मं स्ववता गुरुवृत्त्यै केशवाज्ञयाच चरमं स्ववता ॥
सर्वं सेहे मनसा भीमेनेशैकमानिना हेमनसा ॥४९॥

(पद०) क्षात्रं । धर्मं । स्ववता । गुरुवृत्त्यै । केशवाज्ञया । च चरमं । स्ववता । सर्वं । सेहे । (अ)मनसा । भीमेन । ईशैकमानिना । हेमनसा ॥४९॥

उक्तमेव संग्यक्पिण्डीकृत्य दर्शयति क्षात्रमिति । क्षात्रं । धर्मं । स्ववता संम्यक्रक्षता । भीमेन । सर्वं वैरिकृतं । चरमं दण्डरूपमनिष्टं । मनसा प्रसक्तानिष्टस्य तृच्छतावुद्ध्या । सेहे क्षान्तं । अनुभूतमितियावत् ।

अत्र निमित्तं गुरुवृत्त्यै गुरवो युधिष्ठिरादयः तदनुवृत्त्यै । **केशवाज्ञयाचे-ति** । अत्र दृष्टान्तमाह **स्ववतेति** । **स्ववता** लुप्तोपमा स्वं धनमस्यास्तीति स्ववान् तेन स्ववता (लीनवित्तवता तद्रक्षणार्थं राजादिकृतं सर्वमनिष्टमनुभूयते । नतु तस्य वित्तस्य व्ययःक्रियते एवमेवेति) स्वसंपादितवित्तसंरक्षणार्थं राजादिकृतानिष्टानुभववतेवेति यावत् । अशक्तेनैवेदं सर्वमनुभूतमित्याशंक्य तत्परिहाराय अमनसेत्यपि योज्यं । अमनसा नासिकावाचिनस् शब्दस्तदभिमानिवायुवाचकः तथाच अमो अपरिमितः यो नस् वायुः तद्रूपेणेत्यर्थः । अपरिमितवायुस्वरूपे भीमे शक्तिरसंभाविता नेति भावः । उक्तशंकापरिहारायैव हेतुद्वयं वक्तुं विशेषणद्वयेन विशिनष्टि **ईशैकमानिना** । **हेमनसेति** । ईशेन सहैकस्मिन्विषये मानं ज्ञानमस्यास्तीति ईशैकमानी तेनेत्यर्थः । ईशो यन्मन्यते तदेव भीमोपि मन्यत इति भावः । हेम शब्देन आकेशादाप्रणखाद्धेमरूप ईश्वरो ग्राह्यः तस्य नस् नासिका (आघ्राणकर्त्री ) यस्य सतथोक्तस्तेनेत्यर्थः । तदत्यन्तप्रियेणेति यावत् । तथाच ईश्वरबुद्ध्यनुसारेण ज्ञात्वा कार्यकर्तरि तदत्यन्तप्रियेच शक्तिस्संभावितैवेति भावः ॥४९॥

**मू० यद्भक्तप्रवरेण प्रोतः स्वस्मिन्सकीचकः प्रवरेण ॥**
**पतितास्तस्य सहायाः कृष्णार्थे मानिनः समस्य सहायाः ।**

**(पद०) यद्भक्तप्रवरेण । प्रोतः । स्वस्मिन् । सः । कीचकः प्रवरेण । पतिताः । तस्य । सहायाः । कृष्णार्थे । मानिनः । सं अस्य । सहायाः ॥५०॥**

**यद्भक्तेति** । **यद्भक्तप्रवरेण** यस्य श्रीकृष्णस्य भक्तेषु प्रवरेण श्रे ष्ठेन । अतएव **प्रवरेण** प्रबलेन भीमेन । **सः** प्रसिद्धः । **कीचकः** । **स्व स्मिन्** स्वशरीरे । **प्रोतः** प्रवेशितः । गुदे प्रवेशितशिर आदिर्जातः मृत प्रापित इति यावत् । **मानिनः** गर्ववतः । **तस्य** कीचकस्य । **सहायाः** (पूर्व सहायभूताः अन्ये उपकीचकाः । मानिनः गर्ववन्त इतिवा । **अस्य** कीचक स्य । **सहायाः** सहभूताः कीचकशरीरमादायगताः । **कृष्णार्थे** द्रौपदीरक्षण

तेनैव संपतिताः प्रपातिता इत्यर्थः ॥५०॥

मू० यद्भक्त्याऽनुगृहीतौ पार्थो भीमश्च गोनृपौ नु गृहीता ॥
ऋणमुक्त्यै सुव्यत्यस्त्यै क्रमशो वीरावमुंचतां सुव्यत्यस्त्यै ॥

(पद०) यद्भक्त्या । अनुगृहीतौ । पार्थः । भीमः । च । गोनृपौ । नु । गृहीतौ । ऋणमुक्त्यै । सुव्यत्यस्त्यै । क्रमशः । वीरौ । अमुंचतां । सुव्यत्यस्त्यै ॥५१॥

यद्भक्त्येति । पार्थो भीमश्च (इत्येताविति शेषः) एतौ वीरौ । यद्भक्त्या यस्य कृष्णस्य भक्त्या । अनुगृहीतौ यद्भक्तिसंपादितानुग्रहवन्तौ सन्तौ । नु निश्चयेन । गृहीतौ । (कौरवैरिति शेषः) गोनृपौ गोशब्दो जात्येकवचनः गौः गोसमुदायः नृपः मत्स्यराजश्च तौ । क्रमशः पूर्वपरदिनयोः । अमुञ्चतां । अमोचयतां । पूर्वदिने भीमः गोनृपावमोचयत् । परदिने पार्थो गा अमोचयदिति विवेकप्रदर्शनाय क्रमश इत्युक्तं । किमर्थं । ऋणमुक्त्यै संवत्सरपर्यन्तं विराटवित्तं पाण्डवैर्भुक्तं तत्प्रत्युपकारायेत्यर्थः । प्रयोजनान्तरमाह सुव्यत्यस्त्यै सु सम्यक् वि विशेषेण अति अज्ञातवासमतिक्रम्य अस्तिः असनं स्थितिरिति यावत् तेन तत्प्राकट्यं लक्ष्यते । तथाचाज्ञातवासं सम्यग्विशेषेणातिक्रम्य स्वस्थितिप्राकट्यायेत्यर्थः । कथंभूतायै स्वस्थित्यै । सुव्यत्यस्त्यै सु सम्यक् व्यत्यस्तिः व्यत्यासः स्वामिभृत्यभावव्यत्यासः यस्यां सा तथोक्ता तस्यै । अज्ञातवासे हि विराटः स्वामी पाण्डवाः भृत्याश्चाभवन् । तदपगमानंतरं पाण्डवेषु स्वस्वरूपेणावस्थितेषु तत्स्थितस्य स्वामिभृत्यभावस्य व्यत्यासोऽभूदिति भावः ॥५१॥

मू० यद्भक्त्याऽमितयालं कृष्णाकार्ये विवेश कृष्णाकार्ये ॥
यामीरार्थतनुत्वान्नापाद्भीमादृतेऽपि नापाद्भीमात् ॥५२॥

(पद०) यद्भक्त्या । अमितया । अलं । कृष्णा । कार्ये । विवेश । कृष्णाकार्ये । यां । ईरार्थतनुत्वात् । न । आप । आत् । भीमात् । ऋते । अपि । ना । अपात् । भीमात् ॥५२॥

यद्भक्त्येति । कृष्णा द्रौपदी । अमितया यद्भक्त्या । अलं

उत्तमे । **कार्ये** कर्तव्यविषये । **विवेश** आसक्ताऽभूत् । कथंभूतेकार्ये । **कृष्णाकार्ये** कृष्णः आकार्यः आकारणीयः 'हाकृष्ण द्वारकावास क्वासि यादवनन्दने'त्येवंरूपेण व्याहर्तव्यः ( आह्वातव्यः ) यस्मिन् तत्तथोक्तं तस्मिन् । **यां** द्रौपदीं । **भीमादृते** भीमं विना अन्योपि । **ना** पुमान् । **नाप** । कुतः ? **ईरार्धतनुत्वात्** ईरो वायुः तदर्धदेहत्वात् । ननु पार्वत्यादीनां रुद्राद्यर्धदेहत्वेपि यथाऽन्यपुरुषप्राप्यत्वं तथा द्रौपद्या अपि किंनस्यादित्यत उक्तं **अपात् भीमात् आदिति** । नविद्यते पः पालकः यस्यसः अपः तस्मात् । भीमात् शत्रुभयङ्करात् । आत् अकारशब्दवाच्यात् हरेस्सकाशात् ( सङ्कल्पात् ) त्वां नान्योमारुतात्स्पृशेदिति हरिकृतनियमादिति यावत् । हरिकृतनियमोऽन्यैरनुल्लंघ्यइति दर्शयितुं अपाद्भीमादिति तस्य हरेर्विशेषणद्वयमिति ज्ञातव्यं ॥५२॥

**मू० यां स्प्रष्टुमिच्छन्तमजातशत्रुं न्यवारयत्स्वःस्थमजातशत्रुम् ॥**
**शंरूपाने नित्यरतेरियं श्रीरितिस्म देवेड्यदितेरियं श्रीः॥५३**

**(पद०) यां । स्प्रष्टुं । इच्छन्तं । अजातशत्रुं । न्यवारयत् । स्वःस्थं । अजातशत्रुं । शंरूपाने । नित्यरतेः । इयं । श्रीः । इति । स्म । देवेट् । यदितेः । इयं । श्रीः ॥५३॥**

यामिति । **देवेट्** देवेन्द्रः । **स्वःस्थं** स्वर्गस्थं । **अजातशत्रुं** न जातःशत्रुर्यस्यस तथातं । **अजातशत्रुं** युधिष्ठिरं । **यां** श्यामळाद्यसंस्पृष्टां भारतीं । पूर्वसंस्कारात् **स्प्रष्टुं इच्छन्तं न्यवारयत्** । कुतो न्यवारयदित्यतस्तत्र हेतुं वक्तुं तस्यां भारत्यां श्रीशब्दं निर्वक्ति **शंरूपान इति** । **शंरूपाने** शंरूपः सुखरूपश्चासावनः वायुश्च शंरूपानः तस्मिन् । **नित्यरतेः** नित्यं नियमेन रतेः रमणात् । **इयं** भारती । **श्रीः** श्रीशब्दवाच्येतिहेतोरित्यर्थः । अनेन तस्याः अन्यस्पर्शायोग्यत्वादिति हेतुरुक्तइति ज्ञातव्यं । ननु तर्हि पूर्वं युधिष्ठिरः कथमिमां स्पृष्टवानित्यत उक्तं **यदितेरियं श्रीरिति** । यातीति यत् वायुः तेन इतेः सम्बन्धात् । युधिष्ठिरादीनामिति शेषः । **इयं** द्रौपदी । **श्रीः** संश्रिता श्यामळादिभिरितिशेषः । तथाच

पूर्वं युधिष्ठिरादिषु वायुराविष्ट आसीदिति स्वयमपि श्यामळाद्यन्विताऽसती-स्पर्शयोग्याऽऽसीदित्यर्थः । इदानींतु नतथेत्याशयेनाप्याह इयं श्रीरिति । इयं श्रीरित्यावर्तते । इशब्दः कामवाची तथाच इना कामेन इच्छया युधिष्ठि-रादिकं परित्यज्य यातीति इयः इयमेव वायुमेव श्रीः श्रिता अन्यादेवीः परित्यज्येतिशेषः । अतोन्यवारयदिति भावः । अत्र यामित्यस्य सा कृ-ष्णेति पूर्वश्लोकस्थकृष्णेत्यनेनान्वयः ॥५३॥

**मू० मनसामनसामनसामनसा यमनंतमजस्रमवेदनुया ॥**
**विलयं विलयं विलयं विलयन्निखिलं त्वशुभं प्रचकारच या ॥**

**(पद०) मनसां । अनसा । अमनसा । मनसा । यं । अनन्तं । अजस्रं । अवेत् । अनुया । विलयं । विलयं । विः । अयं । विल-यत् । निखिलं । तु । अशुभं । प्रचकार । च । या ॥५४॥**

किंच या नारी स्वभर्तृसन्निहिता विषयासक्त्या हरिविस्मरणशीला-च तस्याएव कथंचित्परपुरुषसंयोगादिजनितं पापं सम्भावितं द्रौपदी च न-तथा किंतु स्वभर्त्रा वायुनासह सर्वदा हरिस्मरणशीलैव अतो न तस्याः धर्मादिसंयोगजनितं पापं सम्भावितमित्याशयेनाह **मनसेति** । या च द्रौप-दीच । यं वायुं । **अनुया** अनुसृत्ययातीत्यनुया । यदनुसारिणीति यावत् । यच्छब्दबलात्तेनेति सिद्ध्यति । तेन वायुनासह **मनसा** निष्काममनसैव । **अनन्तं** हरिं । **अजस्रं** निरन्तरं । **अवेत्** अस्मरत् । तां स्प्रष्टुमिच्छन्तं न्यवारयदिति पूर्वेणसंबन्धः । कथंभूतेन वायुना । **मनसां** सर्वमनसां । **अनसा** शकटेन तत्स्थानीयेनेत्यर्थः । सर्वमनसामाश्रयेणेति यावत् । पुनः-कथंभूतेन । **अमनसा** नविद्यते मा मर्यादा त्रिविधपरिच्छित्तिः यस्यसोऽमः अनन्त. तस्य नस् नासिका आघ्राणकर्त्री यस्य स तथा तेन विष्णुना स्नेहव-शादवघ्रातेनेति यावत् । याइत्यस्य लिङ्गव्यत्ययेनावृत्तिर्विवक्षिता । विलयमित्यत्र रलयोरभेदेन विः अयमिति पदच्छेदो विवक्षितः । तथाच या यः । **अयं** बुद्धिस्थः । **विः** विष्णुः । तु विशेषेण । स्मर्तृणामितिशेषः । **अशुभं** पापं । **विलयं** विशेषेण लयो यस्य तत्तथा विनष्टमिति यावत् । सन्

प्रचकार तमित्यन्वयः । कथंभूतमशुभं । त्रिलयं विशिष्टो लयो रयः दुःख-दाने वेगो यस्य तत्तथा । पुनःकथंभूतं । निखिलं ज्ञानभक्त्यादिकं । वि-लपत् विलापयत् नाशयदित्यर्थः ॥५४॥

मू० सोऽगाद्दूतमुखेन प्रभुणेदं वर्तते यदूतमुखेन ॥
पार्थार्थे बहुतनुतां यत्र प्राकाशयत् स्वयं सबहुतनुतां ॥५५॥

(पद०) सः । अगात् । दूतमुखेन । प्रभुणा । इदं । वर्तते । यत् । ऊतं । उखेन । पार्थार्थे । बहुतनुतां । यत्र । प्राकाशयत् । स्वयं । स-बहुतनुतां ॥५५॥

सोऽगादिति । सः श्रीकृष्णः । दूतमुखेन दौत्यमुखेन (दूतत्वस्यप्र-दर्शनेन)। अगात् । कुरून्हंतुमितिशेषः । अथवा तेषां वध्यत्व (मध्यस्थत्व) निश्चयायेतिशेषः । यत् येन । प्रभुणा । ऊतं रक्षितं । इदं जगत् (पाण्ड-वकुलंवा ) वर्तते प्रवर्तते । सइत्यन्वयः । अनेन रक्षितजगन्मध्ये कुरूणा-मप्रविष्टत्वोक्तिबलेन तेषां वध्यत्वनिश्चयो लब्धइति ज्ञातव्यं । कथंभूतेन प्रभुणा । उखेन ( उ उत्कृष्टं खं ज्ञानं यस्यस तेन ) उच्चखेन उच्चज्ञानेन । अथवा ऊतं स्वाभिप्रेतं इदं कौरवकुलं । पार्थार्थे पार्थसन्तानार्थे । ऊतं रक्षितमिति व्याख्येयं । यत्र कौरवसभायां । बहुतनुतां ( बह्वी विस्तृता-तनुर्यस्यसः तस्यभावस्तत्ता तां।) प्राकाशयत् । स्वस्य बन्धायोग्यत्वप्राकट्या-येतिशेषः । यत्र सैन्यद्वयमध्ये । पार्थार्थे अर्जुनाय । बहुतनुतां स्वस्य विश्वरूपतां । प्राकाशयत् प्रकटं कृतवान् इतिवा । अत्र स्वस्यैवसर्वसंहर्तृ-त्वप्रदर्शनायेतिशेषः । स्वयं स्वतन्त्रः । स इत्यस्यविशेषणमिदं । कथंभूतां बहुतनुतां । सबहुतनुतां बहुभिर्गुणैः तनुः विस्तृतिः तस्याः भावः बहुतनुता तया सहिता तामित्यर्थः । अत्र ऊतं, पार्थार्थे, बहुतनुतां, यत्र, प्राकाशयत् , इत्येतेषामावृत्तिः ॥५५॥

मू० गुरुकर्णनदीजादीनवधीच्चक्षुर्बलेन जनदीजादीन् ॥
शक्त्या निजया परवान्स्वजनानुद्रेचयन्ननन्तयाऽपरवान्॥५६॥

(पद०) गुरुकर्णनदीजादीन् । अवधीत् । चक्षुर्बलेन । जनदीजा-

दी । ईन् । शक्त्या । निजया । परवान् । स्वजनान् । उद्रेचयन् । अनंतया । अपरवान् ॥५६॥

गुरुकर्णेति । सइत्यनुवर्तते । सः कृष्णः । गुरुकर्णनदीजादीन् द्रोणकर्णभीष्मादीन् । चक्षुर्बलेन दृष्टिसामर्थ्येन । अवधीत् हतवान् । "परसैनिकायुरक्षणा हृतवती"ति वचनात् । कथंभूतः कृष्णः । जनदीजादी अत्र नकारस्थाने दकारस्तृतीयोऽतिशयार्थः । तथाच जननी लोकमाता रमा तस्यां जायत इति जननीजः विरिंचः तस्य अदः अदनं अस्यास्तीति जननीजादी । प्रलयकाले विरिंचमपि यः संहरति तस्य गुरुकर्णनदीजादिहननं तुच्छमेवेति भावः । अतएवोक्तं चक्षुर्बलेनेति । पुनःकथंभूतः । ईन् ईकारो लक्ष्मीवाची तथाच स्वजनान् ई लक्ष्मीं नयन् प्रापयन् । परवान् शत्रुहंतृत्वात् शत्रुसहित इत्युच्यमानः । वस्तुतस्तु अपरवान् शत्रुरहितः । द्वेषादिदोषाभावेन द्वेष्यशत्रूणामप्यभावात् । ततश्च भक्तवत्सलतयैव तस्य दुर्योधनादिवैरिहंतृत्वं न स्वप्रयोजनायेत्युक्तं भवति । यद्वा परशब्द उत्तमपरः । तथाच निजया शक्त्या तृतीया पंचम्यर्थे । निजशक्तेरपि । स्वजनान् भीष्मादीन् । उद्रेचयन् अधिकशक्तियुक्तान् प्रदर्शयन्सन् । परवानित्युच्यमानः । वस्तुतस्तु अपरवान् स्वतः उत्तमशून्यः । कुतः ? निजया अनंतया । शक्त्या युक्तः । अनेन स्वाभाविकानंतशक्तियुक्तत्वादिति हेतुरुक्तइति ज्ञातव्यं । अत्र निजया, शक्त्या, परवान्, अपरवान्, इत्येतेषामावृत्तिः ॥५६॥

**मू० यस्य सुनीतिसहायान्नरिपून्मेनेऽर्जुनः समेतसहायान् ॥**
**अकरोच्चासु परासुप्रततिं सेनासु धावनासुपरासु ॥५७॥**

(पद०) यस्य । सुनीतिसहायात् । न । रिपून् । मेने । अर्जुनः । समेतसहायान् । अकरोत् । च । आसु । परासुप्रततिं । सेनासु । धावनासुपरासु ॥५७॥

यस्येति । यस्य श्रीकृष्णस्य । सुनीतिसहायात् (सुसम्यक् तत्समयानुसारेण नीतिः रथनयनं रथसंचरणं तदेव सहायः तस्मात्) अर-

थ्यात् तदीयशोभननीतिरूपसहायाच्च । समेतसहायान् समेतान् मिळि-
तान् सहत इति समेतसहः सचासौ आसमन्ताद्यातीति समेतसहायान् स
तथोक्तः अर्जुनः । रिपून् न मेने एते रिपवो मद्युद्धयोग्या इति न ज्ञात-
वानित्यर्थः । आसु सेनासु । परासुप्रततिं परासवोन्तर्गतप्राणाः तेषां
प्रततिं प्रकृष्टां विस्तृतिं (मृतानां विततिं) अकरोच्च । कथंभूतासु । धा-
वनासुपरासु अत्र असुशब्देन तद्रक्षणं लक्ष्यते । तथाच धावनेन पला-
यनेन असुरक्षणं प्राणरक्षणं परं उद्देश्यं यासां तास्तथोक्ताः तास्वित्यर्थः ॥

मू० येन जयद्रथमारः पात्रा शत्रूनवापतद्रथमारः ॥
यद्विरहादपि देहे सरथः शश्वत्स्थितेः सदादपि देहे ॥५८॥

(पद०) येन । जयद्रथमारः । पात्रा । शत्रून् । अवापतत् । रथ-
मारः । यद्विरहात् । अपि । देहे । सः । रथः । शश्वत् । स्थितेः ।
सदात् । अपि । देहे ॥५८॥

येनेति । अर्जुनइत्यनुवर्तते । येनेति यच्छब्दबलात्तेनेति लभ्यते ।
पात्रा सारथिभावमाश्रित्य पालकेन । तेन श्रीकृष्णेन सारथिना । जयद्र-
थमारः सैन्धवमारकस्सन् । शत्रून् । अवापतत् अवधीत् (अगमत् ) ।
कथंभूतोऽर्जुनः । येन सारथिना । रथमारः रथस्य मा श्रीः तया रमत
इति तथोक्तः । रथशोभाजनितसुखविशेषवानिति यावत् । एवं हर्यधी-
नशोभः सः रथः । यद्विरहात् यस्य श्रीकृष्णस्यासन्निधानात् युद्धान्ते ।
देहेऽपि दग्धोप्यभूत् । न केवलमर्जुनः श्रीकृष्णसहायेन बाह्यरथे सुख-
वान् किंतु देहेऽपि शरीरेऽपि । शश्वत् एकप्रकारेण । स्थितेः सन्निधानात् ।
कृष्णस्येतिशेषः । सदात् सत् प्रशस्तं कर्म तज्जन्यं सुखविशेषमिति या-
वत् । आसम्यगत्तीति तथोक्तः ॥५८॥

मू० यद्धरितो भरताभः प्रभुर(रं)भाभावितोभिभरताभः ॥
भीमो रभसाऽभिभवी प्रसभं भाभाभिभूर्भासाभिभवी ॥५९॥

(पद०) यद्धरितः । भरताभः । प्रभुः । अ (अं) भाभावितः ।
अभिभरताभः । भीमः । रभसा । अभिभवी । प्रसभं । भाभा-

भिभूः । भासा । भिभवी ॥५९॥

नकेवलमर्जुनएवकृष्णानुग्रहेणैव जयादिकं प्राप्तः किंतु भीमोऽपी-त्याह यद्भरित इत्यादिश्लोकचतुष्टयेन । **यद्भरित इति** । यदित्यस्या-वृत्तिः । यच्छब्दबलात्तच्छब्दः सिद्ध्यति । आवर्ततेच । तथाच **भीमः** भीमसेनः । **यत्** यस्मात् । **यद्भरितः** येन भरतनामकेन हरिणा भरितः पूर्णः । तस्मात् **भरताभः** हरिसदृशः (१)। अथवा भरतो वायुः तस्या-भेवाभा यस्यसः तदवतारत्वात्तत्सदृश इत्यर्थः (२)। यद्वा भरतो राजा तं आसमन्ताद्भासयतीति भरताभः तत्कुलेस्वयमुत्पन्नस्सन् तत्प्रसिद्धिं करो-तीति यावत् (३) । पुनः कथंभूतः । **अंभाभावितः** अं परब्रह्म बिभर्ती-ति अम्भा रमा तया भावितः पोषितः (४) । पुनः कथंभूतः । **अभि-भरताभः** अभि अभितो भरताः दुर्योधनादयः पाण्डवाश्च संग्रामे येषु सैनिकेषु ते अभिभरताः तेषु आसमन्तात् सम्यक् वा भातीति तथोक्तः। (५) पुनः कथंभूतः । **प्रसभं** यथास्यात्तथा । **भासा** स्वतेजसा । **रभसा** वेगेन (अट्टहासेन) । **अभिभवी** शत्रुविषयकपराभववान् (६) । पुनःकथं-भूतः । **भाभाभिभूः** दीप्तिरूपत्वात् भाः सचासौ भारूपाणां रुद्रादीनां अभि सम्यक् भूः आश्रयश्च सतथा (७)। पुनः कथंभूतः । **भिभवी** भं नक्षत्रं अस्यास्तीति भीचन्द्रः तेन तद्वान् अभिमन्युर्लक्ष्यते । भवो रुद्रः तेन तद्वान् घटोत्कचो लक्ष्यते तावस्य स्तइति भिभवी (८) । अत्र सर्व-त्रापि यद्भरितइति हेतुगावर्तनीयः । तथाच कृष्णसन्निधानेनैवैतादृशं मा-हात्म्यं (विशेषणाष्टकं) भीमेनाप्रमिति भावः ॥५९॥

मू० यदनुग्रहि ह)पूर्णत्वाद्भीमस्सर्वानरीननहिपूर्णत्वाऽत्र् ।
अदहद्बाहुबलेन क्रोधाग्रावाहितान्निजाहुबलेन ॥६०॥

(पद०) यदनुग्रहि (ह) पूर्णत्वात् । भीमः । सर्वान् । अरीन् । अनहिपूः । नत्वा । अत्र । अदहत् । बाहुबलेन । क्रोधाग्नौ । आ-हितान । निजाहुबलेन ॥६०॥

यदनुग्रहीति । भीमइत्यावर्तते अरीनित्यपि। यदनुग्रहिपूर्णत्वात्

यस्य कृष्णस्यानुग्रहो एषामस्तीति यदनुग्रहिणः तेषु पूर्णः अधिकानु ग्रहवान् तस्य भावस्तत्वं तस्मात् । **बाहुबलेन** स्वबाहुबलेनैव । नास्त्रसंप्रयोगादिनेति भावः । **सर्वान् अरीन्** बाह्यानांतरांश्च । **अदहत्** भस्मीचकार । कथंभूतानरीन् । **क्रोधाग्नौ** क्रोधो मन्युर्नृसिंहः सएवाग्निः तस्मिन् । **आहितान्** आहुतान् । उकारस्थाने इकारस्तृतीयोऽतिशयार्थः । ननु केन होममन्त्रेण होमइत्यत आह **निजाहुबलेनेति** । निजं स्वसंबन्धि आहुराह्वानं नृसिंहस्य यस्मिन् स निजाहुः सचासौबलश्च ( अत्र बस्य रत्वं लस्य वत्वं नस्य णत्वं च विवक्षित्वा रवेणेति संपद्यते ) बलः रवः मंत्रः सतथा तेनेत्यर्थः । नृसिंहाह्वानकरेण मन्युसूक्तेन नृसिंहरूपएवाग्नौ वैरिबललक्षणं हविर्हुत्वा भस्मीचकारेत्यर्थः । यथोक्तं "स्मरन्नृसिंहं भगवन्तमेनं समन्युसूक्तंच ददर्श भक्त्ये"ति । नन्वान्तराः कामादयोपि तेन भस्मीकृताइति कुतो ज्ञायतइत्यतस्तत्र हेतुगर्भविशेषणमाह **अनहिपूरिति** । नहः नहनं (बंधनं) एषामस्तीति नहिनः बद्धाः न नहिनः अनहिनः जीवन्मुक्तास्तान् स्वदर्शनादिना पुनातीति अनहिपूः । तथाच यः स्वदर्शनादिना जीवन्मुक्तान्पवित्रीकरोति (तादृशकृष्णेन शत्रुभयंकरस्य) तस्य कामाद्यन्तःशत्रुहननं संभावितमेवेति ज्ञायतइति भावः । ननु बाह्यशत्रुविनाशे बाहुबलं साधनमुक्तं आन्तरशत्रुनाशे किं साधनमित्याशंकायां तत्साधनसूचकं विशेषणमुक्तं **नत्वादिति** । नत्वा नमस्कृत्य अरीन् अत्ति (संहरतीति) अत् अत्र नमस्कारो नाम " नाहं कर्ता हरिः कर्ता तत्पूजाकर्मचाखिलमि " त्यनुसंधानाविशेषः । तथाच विहितानुष्ठानकाले ( विहितविषयादनकाले) स्वविहितशत्रुसंहारादिकरणकाले उक्तानुसन्धानविशेषवतः कुतः कामाद्याः शत्रवःस्युरिति भावः । यदनुग्रहपूर्णत्वादिति पाठे यस्यानुग्रहः येषामिति बहुव्रीहिः ॥६०॥

**सू० कृष्णाभीमाप्ततमः शीर्णं येन स्वकीयहृदयमाप्ततमः ॥**
**धृतराष्ट्रसुतानवधीद्भीमेन स्थापितो मनसि सुसुतानवधीत् ।**

(पद०) **कृष्णाभीमाप्ततमः । शीर्णं । येन । स्वकीयहृदयमाप्ततमः**

धृतराष्ट्रसुतान् । अवधीत् । भीमेन । स्थापितः । मनसि । सुसुतान् । अवधीत् ॥६१॥

कृष्णेति । कृष्णाभीमाप्ततमः द्रौपदीभीमयोरतिशयेनाप्तः । स कृष्ण इति शेषः । धृतराष्ट्रसुतान् दुर्योधनादीन् । भीमेन निमित्तेन (भीमं निमित्तीकृत्येति यावत् ) । अवधीत् जघान । कथंभूतेन भीमेन । येन । स्वकीयहृदयमाप्ततमः स्वभृत्यमनोगतं तमः अज्ञानं । शीर्णं नाशितं । येनच श्रीकृष्णः मनसि स्वमनसि स्वकीयानां वा मनसि विहितसमर्पणाय स्थापितः तेनेत्यर्थः । अत्र यद्यपि हृदयाप्ततमइति वक्तव्यं तथापि छान्दसो मुमागमो अलुक्समासो वा विवक्षित इति नकोपिदोषः । (स्वकीयहृदयं आप्ततम इति पदच्छेदे विशेषणयोगो नित्यसाकांक्षत्वात्साधुः) कथंभूतान्धृतराष्ट्रसुतान् । सुसुतान् सुष्ठुनिष्पिष्टान् । लुप्तोपमा वा सुष्ठुनिष्पिष्टसोमतुल्यानिति । अनेन युद्धाख्ये यज्ञे दुर्योधनादीन्सोमतया प्रकल्प्य तन्निष्पेषणं कृत्वा हरये तत्समर्पितवानित्युक्तं भवति । अतएव मनसि स्थापित इत्युक्तं । यथोक्तं " युद्धाख्ययज्ञे सोमबुद्ध्यारिवक्ष " इत्यादि । ननु भीमेन निमित्तेन दुर्योधनादीन् हत्वा भूकण्टकं समुद्धृत्य कृष्णः पुनः किंचकारेत्याशंकायामुक्तं अवधीदिति । भीमेनेतिवर्तते । अवधिं धर्ममर्यादां ईरयतीति ईत् जातइतिशेषः । भीमेनैवनिमित्तेन धर्ममर्यादाप्रवर्तको जातइति भावः । एतदर्थमेव भीमस्य स्वकीयाज्ञाननाशकत्वं तन्मनसि कृष्णस्थापकत्वं चोक्तमिति ज्ञातव्यं ॥६१॥

मू० भीमविपाटितदेहानदर्शयत्स्वानरीन्विपाटितदेहान् ॥
कृष्णायाहितकारी सम्यगीरप्रियः सदाऽहितकारी ॥६२॥

(पद०) भीमविपाटितदेहान् । अदर्शत् । स्वान् । अरीन् । विपाटितदेहान् । कृष्णायाः । हितकारी । सम्यक् । ईरप्रियः । सदा । अहितकारी ॥६२॥

भीमेति । श्रीकृष्णइति शेषः । स्वान् अरीन् दुर्योधनादीन् । कृष्णायाः इति षष्ठी चतुर्थ्यर्थेपि योज्या । कृष्णायै । भीमविपाटितदेहान् । भीमे-

नविपाटिताः छिन्नाः देहाः येषांते तथोक्तास्तान् । **अदर्शयत्** । पुनःकथं-भूतान् । **विपाटितदेहान्** विपाः पक्षिश्रेष्ठाः तेषां अटितं अटनं भ्रमणं ददतीति विपाटितदाः ईहाः चेष्टाः उत्तरीयहस्तपादादिचेष्टाः येषांते तथोक्ताः तान् । विपाटितवैरिदेहभक्षणार्थमागताः पक्षिश्रेष्ठाः तदीयहस्तपादादिचेष्टाभिर्वारितास्सन्तः इतस्ततो भ्रमन्ति । एवंविधचेष्टायुक्तानदर्शयदिति भावः । कथंभूतः कृष्णः । **कृष्णायाः** द्रौपद्याः । **हितकारी** हितं करोतीति सः । कृष्णाहितकरणे कोहेतुरित्यतस्तत्सूचकं विशेषणान्तरमाह **सम्यगीरप्रिय इति** । ईरः मुख्यवायुः तस्य सम्यक्प्रियो यतोऽतस्तद्भार्यायाः कृष्णायाः हितकारीति भावः । कृष्णेन कृतं द्रौपदीहितं कीदृशमित्यतस्तद्दर्शयितुमन्यद्विशेषणमुक्तं **सदाहितकारीति** । सदा निरन्तरं स्वभक्तानामहितान् वैरिणः कालयति संहरतीति सदाहितकारी । रस्य लत्वं कलसंहरणइतिधातोः । यद्वा सतां भक्तानां आ सम्यक् समन्ताद्वा ( हितं करोतीतिवा ) हिताः सदाहिताः तेषां कालः कलनं करणं अस्यास्तीति तथोक्तः । तथाच द्रौपदीवैरिसंहरणरूपहितं कृष्णेन कृतमित्यनेन दर्शितमिति ज्ञातव्यम् ॥६२॥

**मू० अथ हरिणाऽपीतबलं द्रौणेरस्त्रं महारिणा पीतबलं ॥**
**दधता वासोऽमरणं नीतं चक्रेऽभिमन्युजं सोमरणं ॥६३॥**

**(पद०) अथ । हरिणा । अपि । इतबलं । द्रौणेः । अस्त्रं । महारिणा । पीतबलं । दधता । वासोऽमरणं । नीतं । चक्रे । अभिमन्युजं । सोमरणम् ॥६३॥**

**अथेति** । **अथ** वैरिसंहरणानन्तरं । **दधता** गर्भपोषकेण । **महारिणा** महान्तः अराः नेमयो यस्य तत् महारं सुदर्शनं तदस्यास्तीति महारी तेन । **हरिणा** कृष्णेन । **इतबलमपि** बलेन इतं युक्तं इतबलं सामर्थ्ययुक्तमपि । **द्रौणेः** अश्वत्थाम्नः । **अस्त्रं** ब्रह्मास्त्रं । **पीतबलं** पीतं नाशितं बलं यस्य तत्तथोक्तं । कृतमिति शेषः । ननु हरिणा द्रौण्यस्त्रं नाशितबलं कृतमिति कथं ज्ञायत इत्युक्तं **अभिमन्युजं नीतं चक्रइति** ।

यइतिशेषः । **यः** कृष्णः । **अभिमन्युजं** परीक्षितं । गर्भाद्बहिरितिशेषः । **नीतं** निर्गतं । प्रसूतमिति यावत् । **चक्रे** । कथंभूतं । **वासोऽमरणं** वाससि उत्तरायाः तन्वां उल्बे ( वासस्सदृशे गर्भवेष्टनचर्मपुटकरूपजरायौ अमरणं नविद्यते मरणंयस्यतं । स्वरक्षणेनामृतं । एतदर्थमेव दधतेत्युक्तं । पुनःकथंभूतं । **सोमरणं** अत्र रणशब्देन तत्संबंध्यस्त्रं लक्ष्यते । उमया सहितः सोमः रुद्रः तदात्मा द्रौणिः तस्य रणः रणसंबंध्यस्त्रं यस्मिन्सतथा तं । द्रौण्यस्त्रलक्ष्यमिति यावत् । " तत्रैव पातयाम्यस्त्रमुत्तरागर्भकृन्तने" इति वचनात् । तथाच द्रौण्यस्त्रलक्ष्यभूतः परीक्षित् गर्भे प्रसूत्यनंतरं बहिरपि हरिणा रक्षितो न मृतः । अतस्तदीयमस्त्रं नाशितबलं हरिणा कृतमिति ज्ञायत इति भावः ॥६३॥

**मू० तस्य च रक्षा सुकृता जनार्दनेनेशशेषकेक्षासुकृता ॥**
**पार्थेषु प्रेमवता नित्यं भर्त्राऽसुतासुविप्रेमवता ॥६४॥**

**(पद०) तस्य । च । रक्षा । सुकृता । जनार्दनेन । ईशशेषकेक्षासुकृता । पार्थेषु । प्रेमवता । नित्यं । भर्त्रा । असुतासुविप्रेम् । अवता ॥**

न केवलं द्रौण्यस्त्रलक्ष्यभूतः परीक्षित् गर्भे प्रसूत्यनंतरं बहिरपि हरिणा रक्षितः (नमृतः), किंतु यावज्जीवं रक्षितश्चेत्याह **तस्येति** । **जनार्दनेन** (आयुर्घातकजनमर्दकेन कृष्णेन) । **तस्य** परीक्षितः । **नित्यं** सर्वदा । **रक्षा**च । **सुकृता** सम्यक्कृता । अत एव लोके स विष्णुरात इति प्रसिद्धः । ब्रह्मादिरक्षकस्य परीक्षिद्रक्षणं नाश्चर्यमित्याशयेन कृष्णं विशिनष्टि **ईशशेषकेक्षासुकृतेति** । ईशः रुद्रः शेषः अनन्तः को ब्रह्माच ईशशेषकाः तेषां ईक्षया कृपाकटाक्षेणैव असून् प्राणान् करोतीति ईशशेषकेक्षासुकृत् तेनेत्यर्थः । संहारकेषूत्तमत्वाच्छेषरुद्रयोः स्रष्टृषूत्तमत्वात्कस्य च ग्रहणमिति ज्ञातव्यं । ननु परीक्षिद्रक्षणे किं निमित्तमित्यत उक्तं **पार्थेषु प्रेमवतेति** । पाण्डवेषु प्रीतियुक्तेन । **भर्त्रा** (तेषां) स्वामिनेतिच । तथाच पार्थानां स्वभृत्यत्वात्तेषु प्रेमवता कृष्णेन तद्वंशधारकस्य परीक्षितः रक्षणं कृतमिति भावः । नन्वेवं परीक्षिन्नित्यं कृष्णैकरक्षितश्चेत्कथमसंपूर्णायुः विप्रशापेन

मृत इत्यतउक्तं **असुतासुविप्रेमवर्तेति** । असुताः अनिष्पिष्टाः अदांताः असवः प्राणाः इन्द्रियाणि येषांते असुतासवः अजितेन्द्रियाः क्रोधवशाइति यावत् तेचते विप्राः ब्राह्मणाश्च तेषां ई श्रियं शापरूपां अवत रक्षतेत्यर्थः। तथाच क्रोधाविष्टविप्रशापरक्षणं कर्तुं (विप्रशापं सत्यं कर्तुं) शापपर्यन्तमेव रक्षाकृतेति भावः ॥६४॥

**मू० ज्ञानं परमं प्रादाद्भीष्मगतः सृतिविमोक्षचरमं प्रादात् ॥**
**पाण्डुसुतानामधिकं चक्रे वेदं गुणोत्तरं स्वनामधिकम् ॥६५॥**

**(पद०) ज्ञानं । परमं । प्रादात् । भीष्मगतः । सृतिविमोक्षचरमं । प्रादात् । पाण्डुसुतानां । अधिकं । चक्रे । वेदं । गुणोत्तरं । स्वनामधिकं ॥६५॥**

**ज्ञानमिति । प्रादात्** प्रकृष्टं राज्यं न ददति (पाण्डवानामिति) प्रादाः कौरवाः तानत्तीति प्रादात् श्रीकृष्णः । **भीष्मगतः** भीष्मसन्निहितस्सन् । **सृतिविमोक्षचरमं** सृतेः संसारस्य विमोक्षो यस्मात्स सृतिविमोक्षः मोक्षधर्मः सएव चरमः अन्तिमो यस्यतत्तथोक्तं तत् । मोक्षधर्मान्तविषयकमिति यावत् । अथवा सृतिविमोक्षरूपे साध्ये चरमं चरमकारणरूपं। **परमं** उत्तमं । **ज्ञानं । पाण्डुसुतानां । प्रादात्** प्रददौ । पाण्डुसुतानामित्यावर्तते । किंच पाण्डुसुतानां । **वेदं** पाण्डवप्रतिपादकं इतिहासरूपं पंचमं वेदं (भारतं) । **अधिकं** ऋगादिवेदापेक्षया उत्तमं । **चक्रे** ( प्रतिपादितवान् ) कुतइत्यतस्तत्रहेतुगर्भं इतिहासविशेषणद्वयं **गुणोत्तरं स्वनामधिकमितिच । गुणोत्तरं** उत्तराः उत्कृष्टाः गुणाः भगवद्गुणाः प्रतिपाद्याः यस्यसः गुणोत्तरः तं ऋगादिवेदानुक्तस्वगुणप्रतिपादकमिति यावत् । **स्वनामधिकं** स्वस्यनामानि विश्वंविष्णुरित्यादिसहस्रनामानि धीयन्ते अस्मिन्निति स्वनामधिः स्वनामधिरेव स्वनामधिकः स्वार्थे कप्रत्ययः तं तथाच भारतरूपो वेदः प्रसिद्धवेदानुक्तस्वगुणप्रतिपादकत्वात् प्रत्येकं बह्वर्थ सहस्रनामवत्त्वाच्च ऋगाद्यपेक्षयोत्तमइति प्रतिपादितवानिति भावः ॥६५॥

**मू० तेनात्रापि सुजातैर्हयमेधस्तुरगावर्तनेऽपि सुजातैः ॥**

पाण्डुसुतैस्सवसूकैराप्तैर्व्यासात्मना सुसवसूकैः ॥६६॥

(पद०) तेन । अवापि । सुजातैः । हयमेधः । तुरगावर्तने । अपि । सुजातैः । पाण्डुसुतैः । सवसूकैः । आप्तैः । व्यासात्मना । सुसवसूकैः ॥६६॥

तेनेति । पाण्डुसुतैः । हयमेधः अश्वमेधः । व्यासात्मना व्यासस्वरूपेण । तेन कृष्णेन । तदुभयप्रसादेनेति यावत् । अवापि प्राप्तः । कथंभूतैः । सुजातैः सु समीचीनं जातं जन्म येषां ते तथोक्तास्तैः । अनेन यज्ञाधिकारस्सूचितः । पुनःकथंभूतैः । तुरगावर्तनेऽपि पृथिव्यामश्वपरिवर्तनेऽपि । सुजातैः जययोरभेदात्सुयातैः सु सम्यक् यातैः गतैः । पुनःकथंभूतैः । सवसूकैः वसुना द्रव्येण सहितः सवसुः उकारवाच्ये रुद्रे नियामकतया स्थितः उः कः आनन्दरूपः परशुरामो येषांते तथोक्ताः तैः । अश्वमेधयज्ञार्थं धनशून्यानामेषां यज्ञोच्छिष्टद्रव्याधिपरुद्रदेहान्तर्गतः परशुरामः धनं ददातीति भावः । यद्वा वसुना सहितः सवसुः सचासौ उश्च सवसूः । यज्ञोच्छिष्टधनाधिपरुद्रान्तर्गतपरशुरामः कः कार्यकर्ता येषां ते तथोक्तास्तैरित्यर्थः । पुनःकथंभूतैः । आप्तैः (धनं प्राप्तैः) तमेव शरणं प्राप्तैः । पुनःकथंभूतैः । सुसवसूकैः सु समीचीनः सवः यज्ञः तं सुन्वन्ति कुर्वन्तीति सुसवसुवः ते च ते उकाः उत्कृष्टप्रकाशरूपाश्च बुधाइति यावत् । अथवा सुसवस्य समीचीनयज्ञस्य सुः सवनं करणं तस्मिन् उः उत्कृष्टः कः प्रकाशः ज्ञानं येषां ते तथोक्तास्तैरित्यर्थः । यज्ञकरणोपयुक्तज्ञानवद्भिरिति भावः ॥

मू० तदनु सुपाण्डुतनूजैः रेमे क्ष्मां पालयन्सुपाण्डुतनूजैः ॥
अनुपमसुखरूपोजः परमः श्रीवल्लभः सति सुखरूपोऽजः ॥

(पद०) तदनु । सुपाण्डुतनूजैः । रेमे । क्ष्मां । पालयन् । सुपाण्डुतनूजैः । अनुपमसुखरूपः । जः । परमः । श्रीवल्लभः । सति । सुखरूपः । अजः ॥६७॥

तदन्विति । यच्छब्दबलात्सइति सिद्ध्यति । सः कृष्णः । तदनु तदनन्तरं । सुपाण्डुतनूजैः समीचीनैः पाण्डुतनयैर्निमित्तैः । क्ष्मां पालयन्

रेमे। कथंभूतैः। **सुपाण्डुतनूजैः** सु अत्यन्तं पाण्डुः शुद्धाचसा तनूश्च बाह्य-देहः स्वरूपदेहश्च तां यान्तीति सुपाण्डुतनूयाः जययोरभेदः तैः सुपाण्डुतनूयैः बाह्यदे(हे)हैः स्वरूपदेहं प्राप्तवद्भिरिति भावः । इदं नाश्चर्यमित्याशयेन तस्य महिमानमाहोत्तरार्धेन । **जः** जययोरभेदात् यः । **अनुपमसुखरूपः** असदृशसुखात्मकं रूपं शरीरं यस्य स तथा । **परमः** सर्वोत्तमः । **श्रीवल्लभः** श्रीपतिः । **सति** महदादिकार्ये । **सुखरूपः** सु निर्दुष्टं यथाभवति तथा खेन आकाशेन दृष्टान्तेन रूप्यत इति सुखरूपः । आकाशवत्सर्वकार्येषु प्रविष्टतया ज्ञेय इति भावः ( अथवा खैः ब्रह्मादीन्द्रियैः रूप्यते ज्ञायतइति खरूपः) । **अजः** जननरहितः (नित्यमुक्तः) स इति संबंधः । एतादृशमाहात्म्यवतः कृष्णस्य पाण्डवैः सह क्ष्मापालनं कियत् । नाश्चर्यकरमित्युक्तं भवति ॥६७॥

**मू० सुगतिं चरमामददान्निजयोग्यां ज्ञानिसुततिं परममददात् ॥**
**पार्थानां सयदूनां स पितृप्रेष्यादिनामिनां सयदूनां ॥६८॥**

(पद०) सुगतिं। चरमां । अददात् । निजयोग्यां । ज्ञानिसुततिं। **परमां । अददात् । पार्थानां । सयदूनां । सः । पितृप्रेष्यादिनामिनां । सयदूनाम् ॥६८॥**

**सुगतिमिति** । **सः** श्रीकृष्णः । **सयदूनां** यादवसहितानां । **पार्थानां** पाण्डवानां । **ज्ञानिसुततिं** ज्ञानिनां देवादीनां सु शोभना ततिः समूहो य (स्यां सा) स्यास्सा तथोक्तातां । **परमां** इतरदेवतापेक्षयोत्तमां । **निजयोग्यां** स्वयोग्यां । **चरमां** धर्मादिपुरुषार्थेषु चरमां मोक्षरूपां । सालोक्यादिषु चरमां सायुज्यरूपामितिवा । **सुगतिं** शोभनां गतिं। **अददात्** अदादिति वक्तव्ये दकारस्याभ्यासः छान्दसः सचातिशयार्थः अतिशयेनादादिति । कथंभूतानां। **पितृप्रेष्यादिनामिनां** वसुदेवादयः पितरः उद्धवादयः प्रेष्याः आदिपदात् प्रद्युम्नादयः पुत्राः पार्थाः पितृष्वसुः पुत्राः बलभद्रादयो भ्रातरइत्यादिग्राह्यं । तथाच पितृप्रेष्यादिनामानि शब्दाः एषां सन्तीति तथोक्ताः तेषामित्यर्थः । अनेन वसुदेवादिषु पित्रादिशब्द

मात्रं । नत्वर्थः । कृष्णस्य जननाभावादिति सूचयति । तेनचैतेषां कृष्णेन शरीरसंबंधप्रयुक्तस्नेहेन मोक्षोदत्तइति शंका निराकृतेति ज्ञातव्यं । शेषमार्गेण गरुडमार्गेण वा विरिंचं प्रविष्टानां देवानां विरिंचस्य च सायुज्यप्रदे कृष्णे नेदमाश्चर्यमित्याह **सयदूनामददादिति । सयदूनां** यान्तीति यंतो मरुतः उकारवाच्यो रुद्रः तैस्सहिता गरुडाद्यादेवाः सयदवः तेषां । अत्र रुद्रवाचकेन उकारेण रुद्रो नग्राह्यः । किंतु शेषो ग्राह्यः । रुद्रस्येदानीं मुक्त्यभावात् । कर्मणि षष्ठी । (यातीति यन् गरुडः द्वीपांबुराशिकुलाचलादिचालकवेगवद्गरुद्भ्यामुड्डीयोड्डीयगंतुर्गरुडस्य अब्भक्षो वायुभक्षइतिवदसाधारण्येन व्यपदेशमाश्रित्य ग्रहणात् गरुडादिदेवा इतिवा ) । तथाच सयदून् मरुच्छेषादिदेवसहितान् गरुडादीन् । **अददात्** अत्तीत्यदन् अदंश्चासावश्च ब्रह्माच सोऽददः तं अत्तीति अददात् कृष्णइत्यर्थः । अत्र ब्रह्मणः शेषाद्यदनं कृष्णस्य ब्रह्मादनं प्रळये स्वदेहनाशार्थमागतानां ग्रसनं मुक्तौ सायुज्यंचेत्युभयविधं विवक्षितमिति ज्ञातव्यं । पितृप्रेष्यादिनामवतामित्येतत् देवतावाचकसयदूनामित्येतद्विशेषणतयापि योज्यम् । अत्र पितरः शेषाद्याः पुत्राः इन्द्राद्याः प्रेष्या भृत्याः केचिदित्यवगन्तव्यं । अत्रचेदं विशेषणं जन्यानां जनकेषु भृत्यानां स्वामिषु देहलयोभवतीति सूचयितुम् ॥६८॥

**मू० रेमे तत्रापि सुखी परमोऽनंतो ननंद तत्रापि सुखी ॥**
**प्राणेनेन्दिरयाच प्रयुतो नित्यं महागुणेन्दिरयाच ॥६९॥**

**(पद०) रेमे । तत्र । अपि । सुखी । परमः । अनंतः । ननंद । तत्र । अपि । सुखी । प्राणेन । इंदिरया । च । प्रयुतः । नित्यं । महागुणेन्दिरया । च ॥६९॥**

**रेमइति** । सइत्यनुवर्तते । सः हरिः । तत्र तेषां मध्ये । रेमे । कथंभूतः । **अपिसुखी** अत्र तृतीयोऽतिशयइत्यतो बकारस्थाने पकारः वबयोश्चाभेदः । तथाच विसुखं सुखविरुद्धं दुःखं तदस्यास्तीति विसुखी दुःखी स नभवतीत्यविसुखी सर्वथा दुःखास्पृष्टइत्यर्थः । अत्र हेतुद्वयं पर-

**मोऽनंत इति । परमः** सर्वोत्तमः । **अनंतः** देशतः कालतो गुणतश्चांतशून्यः। **सुखी** सर्वत्रापि सुपूर्णसुखोदेवः (नित्याभिव्यक्तसुखः) । **तत्रापि** वैकुण्ठादि स्थानेष्वपि । **ननंद** । अतिसमृद्धिमत्तया व्यक्तोऽभवदिति यावत् । पुनः- कथंभूतः । **प्राणेन इंदिरयाच** । **प्रयुतः** प्रकर्षेण साक्षादेव युतः । अनेन शेषादीनां तारतम्येन योगमात्रं श्रीप्राणयोः प्रकृष्टो योगइति सूचितम् । श्रीप्राणयोरपि ।किं प्रयुक्तत्वं समानं । नेत्याह **महागुणेंदिरयाच प्रयुत इति** । महान्तः प्राणापेक्षयोत्कृष्टाः गुणाः यस्यास्सा तया इंदिरया प्रकर्षे- णार्धदेहात्मनाच युतइत्यर्थः । अत्र महागुणत्वं हेतुतयोक्तं । यद्वा महा- गुणेंदिरा स्वरूपभूतलक्ष्मीः तया प्रयुतः तादात्म्येन संगतइत्यर्थः । ( प्राणे इंदिराद्वारा रेमे नतु द्वारपरित्यागेन । इंदिरायां स्वात्मकस्त्रीरूपेंदिरया प्र- युतः रेमे स्वरमणत्वात् ) ।।६९।।

**मू० एवं सर्वाणि हरे रूपाणि श्रीपतेः सुपर्वाणिहरेः ।।**

**पूर्णसुखानि सुभान्ति प्रततानि निरन्तराणि सुभान्ति ।७०।**

**(पद०) एवं । सर्वाणि । हरेः । रूपाणि । श्रीपतेः । सुपर्वाणिहरेः । पूर्णसुखानि । सुभान्ति । प्रततानि । निरन्तराणि । सुभान्ति ।।७०।।**

**एवमिति । श्रीपतेः** हरेः । (यानि) **रूपाणि** मत्स्यादीनि (तानि) **सर्वाणि । एवं** भारतप्रतिपाद्यमूलरूपवत् तत्प्रतिपाद्यश्रीकृष्णरूपवद्वा ज्ञे- यानि । कथंभूतस्य हरेः । **सुपर्वाणिहरेः** सुपर्वाणः देवाः तेषां आणिः (चाचलिः ? ) मुख्याश्रयइति यावत् । स्वस्थानादेः दैत्यान् हरतीति हरिः । सुपर्वाणिश्चासौ हरिश्चेति विग्रहः तस्येत्यर्थः । एवमित्युक्तं विवृणोति **पूर्णे- त्यादिना । पूर्णसुखानि** संपूर्णसुखस्वरूपाणि । **सुभान्ति** सुप्रभाणि । **प्रततानि** प्रकर्षेण व्याप्तानि । **निरन्तराणि** परस्परभेदरहितानि । **सुभान्ति** सुष्ठु भा प्रभा येषांते सुभाः (लक्ष्म्यादयो देवाः) तेषां अंति अंतिके (हृदये बहिः समीपे वा ) स्थितानीति शेषः । (सर्वाणि मत्स्यादिरूपाणि भारत प्रतिपाद्यकृष्णरूपवत् ज्ञानिभिर्ज्ञेयानीत्यर्थः) ।।७०।।

**मू० राम राम महाबाहो माया ते सुदुरासदा ।।**

वाद सादद को लोके पादावेव तवासजेत् ॥७१॥

(पद०) राम । राम । महाव । अहो । माया । ते । सुदुरासदा । वाद । सादद । कः । लोके । पादौ । एव । तव । आसजेत् ।७१।

सर्वावताराणां स्वरूपं सामान्यत उक्त्वा रामं विशेषतः स्तौति रामेति । र अग्ने । रकारस्याग्निबीजत्वात् । दुष्टदाहकेति यावत् । आम अपाक । अत्र पाकशब्देन तापो लक्ष्यते । तथाच अतापेत्यर्थः । तापत्रय परिहर्तरिति (रहितेति) यावत् । रश्चासावमश्च रामः । रः क्रीडारूपः । अमः अप्रमेयः रश्चासावमश्च रामः तस्य संबुद्धिः । र अमेतिवा । महाव महाबल । मबयोरभेदात् महाम । महती मा ज्ञानं यस्य स महामः । महाज्ञानेति वा । वबयोरभेदात् महाव महाज्ञानेतिवा । अहो हे इत्यर्थः । महाबाहो इत्येकं पदं वा । ते तव । माया महिमा । सुदुरासदा सु शोभनैः मुक्तब्रह्मादिभिः दुरासदा दुष्प्राप्या । वाद ज्ञानप्रद । स्वगति प्रद । गंधनप्रद । उपलक्षणया घ्राणादिभोगदेति यावत् । वा गतिगंधनयोरिति धातोः । सादद सादः विनाशः तमोभिधः । तथाच अमरशत्रूणां तमः प्रदेत्यर्थः । वादसाददेत्येकं पदं वा । वादस्य वादकथायाः सादः अवसानं (संपूर्तिः) तत्प्रद । विष्णुविषये (गुरुशिष्ययोः) वादकथा केनापि साकल्येन कर्तुमशक्येति भावः । लोके जगति सत्यादिलोके । कएव ब्रह्मैव । तव । पादौ । आसजेत् आश्रयेत् । अच्छिन्नभक्तत्वात् । अन्यस्य त्वत्पादाश्रयणं छिन्नभक्तत्वान्नेति भावः ॥७१॥

मू० जेत्सवातव वेदापाकेलोकोददसादव ॥
दासरादुसुतेयामाहो वाहाममरामराः ॥७२॥

(पद०) जेत् । सवातव । वेदाप । आके । लोकोदद । सादव । दासर । आत् । उसुतेयाम । अह । उवाह । आ । मम । राम । राः ।

जेदिति । (त्वमेवेति शेषः) । जेत् सर्वजेतः । सवातव वातेन मुख्यप्राणेन सहितं सवातं जगत् तत् वातयति प्रवर्तयतीति सवातवः तस्य संबुद्धिः हे सवातवेति । वेदाप वेदगम्य । (वेदान् आसमन्तात् व्यासरू-

पेण पातीति वेदापः तस्य संबोधनमिति वा । प्यतेगम्यतइतिपः सनभवती-त्यपः वेदैः अपः वेदापः साकल्येन वेदागोचरइति यावत् तस्य संबोधनं वेदागम्येति वा ) **आके** समीपे दूरेच । " आकं दूरसमीपयोरित्यभिधानं" दोषाणां जगतश्च दूरे । गुणानां समीपेच स्थितेति शेषः । (आके सर्व-जगदन्य सर्वदोषविरुद्धेतिवा । सर्वगुणपूर्ण सर्वदोषाभाववन्निति यावत् ) **लोकोदद** उदेत्यनेन मोक्षइत्युदं ज्ञानं । उदेत्यनेन ज्ञानमित्युदं कर्म वा । लोकस्य उदं ददातीति लोकोददः तस्य संबुद्धिः । **सादव** सादस्य भक्ता-नां भयस्य व वारक निवारक । **दासर** दासाः दस्यवः तेषां र अग्ने दा-हकेति यावत् । यद्वा दासाः भृत्याः तेषां र रतिप्रदेत्यर्थः । आ अत् इति पदच्छेदः? तथाच आ आदित्यः तं अत्तीति **आत्** आदित्यभक्षक । अनेन सौरमतं निराकृतमिति ज्ञातव्यं । **उमुतेयाम** उः रुद्रः तस्य सुतौ स्कन्द विघ्नेशौ ईः लक्ष्मीः शक्तिनाम्नी तासां याम नियामक । अनेन शैवस्कान्द गाणपतशाक्तेयमतानि निराकृतानीति ज्ञातव्यं । **अह** हीयतइति हः स न भवतीत्यहः अहेय । अहीनेतिवा । **उवाह** वबयोरभेदात् उः रुद्रः वाहः वाहको वाहनं यस्य स तथोक्तः तस्य संबोधनं । हरिः कदाचित् मेषरूप शंकरारूढो जातइति पुराणप्रसिद्धिः । (हे राम त्वमेव मम राः धनमित्यर्थः श्रीरामस्यैवाचार्यद्रव्यरूपत्वकथनेन आचार्याणामपि ब्रह्मवदच्छिन्नभक्तत्वं सूचितं) । आ मम राम रेति पाठे आ मम राः अमर इति पदानि । त-थाच हे अमर त्वं आ समन्तात् मम राः धनं विष्णो त्वमेव मम धनं नान्यदिति भावः । (रामरामेति श्लोकस्य प्रत्यक्षरप्रातिलोम्येन जेत्सदेति श्लोकोभवतीति प्रत्यक्षरप्रतिलोमयमकोयं श्लोकः । ) ॥७२॥

**मू० देवानां पतयो नित्यं (नो मतं यस्य जानते) मतं यस्य न जानते॥**
**तस्मै देव नमस्येऽहं भवतेऽसुरमारये ॥७३॥**

(पद०) देवानां । पतयः । नित्यं । मतं । यस्य । न । जानते । तस्मै । देव । नमस्ये । अहं । भवते । असुरमारये ॥७३॥

बुद्धं नमति । देवानामिति । देवानां पतयः देवश्रेष्ठा अपि । यस्य बुद्धरूपस्य हरेः । मतं सिद्धान्तं । नित्यं नो (न) जानते । किमु देवाः किंपुनर्दानवाइति भावः । हे देव । अहं । तस्मै भवते (नित्यं) । नमस्ये । कथंभूताय । असुरमारये असुरघातकाय । असुराणां मायाः ज्ञानस्य शोभायावा अरय इतिवा । असुभिः रमंतइत्यसुराः देवाः तेषु मा ज्ञानं शोभा वा तस्याः रये दात्रे इतिवा । रा दान इति धातोः । अत्र रायेतिभाव्ये अकारस्य इकारस्तृतीयोऽतिशयार्थः । तथाच इकारस्य गुणे अयादेशेच सति रये इति चतुर्थी युक्तेति भावः (अनेन बुद्धावतारस्यापि मुमुक्षुज्ञेयत्वं सूचितं भवति ॥७३॥

मू० समस्तदेवजन कवासुदेवपरामृत ॥
वासुदेव परामृत ज्ञानमूर्ते नमोऽस्तु ते ॥७४॥

(पद०) समस्तदेवजन । कवासुदेवपरामृत । वासुदेव । परामृत । ( पर । अमृत ) । ज्ञानमूर्ते । नमः । अस्तु । ते ॥७४॥

( अत्र द्वितीयतृतीयपादयोरैकरूप्यं ) कल्किनं नमति समस्तेति । समस्तदेवजन देवाश्च ते जनाश्च देवजनाः नृदेवजनाः दुष्टराजानइति यावत् । सम्यगस्ताः परास्ताः देवजनाः येन सः तस्य संबुद्धिः हे समस्तदेवजन । कलेरन्ते कुनृपान् कल्की जघानेति हि प्रसिद्धिः । कवासुदेवपरामृत कं सुखं वं ज्ञानं असुः प्राणः देवः देवनं क्रीडादिसमकं परामृतं मोक्षश्च यस्मात्स तथोक्तः तस्य संबोधनं । वासुदेव वाज्ञानं सु सुखं ताभ्यां देव । अनेन हे कल्किन्निति संबोधनं कृतमिति ज्ञातव्यं । समानार्थत्वात् । कलं ज्ञानं कं सुखं तद्वान् कल्की इति । परामृत उत्तममुक्त अनंतसुखेति यावत् । पर उत्तम । अमृत मरणरहितेतिवा । ज्ञानमूर्ते ज्ञानस्वरूप । ते तुभ्यं । नमोऽस्तु । यद्वा समस्तदेवजनक समस्तदेवोत्पादक । वासुदेव वा ज्ञानस्वरूपः असुः प्राणः तस्य देव - पर जगदुत्तमोत्तम । अं दुष्टानामन्तकेतिवा । कन शब्दैकप्रकार । वासुदेव

आदियुगादिकृत् वासुदेवनामक। परामृत परे परांते अमृत शश्वदेकप्रकारेतिवा । पराणां उत्तमानां अमृत मोक्षप्रद । ज्ञानमूर्ते ते नमोऽस्त्वित्यर्थः ॥

मू० देवादे देवलोकप पूर्णानन्दमहोदधे ॥
सर्वज्ञेश रमानाथ देवादेऽदेऽवलोकप ॥७५॥

(पद०) देवादे । देवलोकप । पूर्णानन्दमहोदधे । सर्वज्ञ । ईश । रमानाथ । देव । अदे । अदे । अव । लोकप ॥७५॥

देवेति । देवादे आदिश्चासौ देवश्च तस्य संबोधनं आदिदेवेत्यर्थः । देवलोकप महापद्मयः सुरगणपालक । पूर्णानंदमहोदधे पूर्णानंदेन महोदधिरिव तस्य संबुद्धिः । सर्वज्ञ स्वपरगताखिलविशेषविषयज्ञान । ईश स्वामिन् प्रेरकेतिवा । रमानाथ रमापते । देव क्रीडादिगुण । अदे अत्र अशब्देनाखिलंग्राह्यं नामैकदेशे नामग्रहणस्य विहङ्गो वाहनं येषां ? इत्यादौ दर्शनात् । तथाच अं अखिलं जगदुत्पत्त्यादिकं ददातीत्यदिः तस्य संबुद्धिः अदे इति । अदिरित्यत्र अकारस्थाने इकारस्तृतीयोऽतिशयार्थः । अदे नविद्यते दिःक्षयः यस्य सः अदिः अक्षयः तस्य संबोधनं अदे अविनाशिन्निति यावत् दीङ् क्षयइति धातोः । लोकप अत्र लो शब्देन संसारलोपवन्तो मुक्ता उच्यन्ते तेषां कं सुखं तत्पातीति लोकपः तस्य संबोधनं लोकपेति । ( त्वं अस्मान् ) अव रक्ष अव रक्षणे इति धातुः । अत्र प्रथमचतुर्थपादयोरैकरूप्यं) ॥७५॥

मू० यो निर्ममेऽशेषपुराणविद्यां योनिर्ममे शेषपुराणविद्याम् ॥
योनिर्ममेऽशेषपुराणविद्यां योनिर्ममेशेषपुराणविद्याम् ॥७६॥

एवं भारतमाश्रित्य सर्वशास्त्रनिर्णयं कृत्वा एतद्विद्यावेद्यं विद्याधीशं स्मरंस्तच्छरणागतिं प्रार्थयते । (अत्र एकपादाभ्यासेन यमकनिर्वाहः) ॥

(पद०) यः । निर्ममे । अशेषपुराणविद्यां । योनिः । मम । इशेषपुः । आ। अणवित् । यां । यः। अनिः । ममे । अशेषपुराणवित् । द्यां । या । उ । निर्ममेशे । षपुराणविदि । आ । अं ॥७६॥

अथान्वयपुरस्सरमर्थो वर्ण्यते । यः अयं यकारः इकार अकारप्रकृ-

तिकः । ननु यच्छब्दः । इ+अ इति स्थिते यणादेशेसति निष्पन्नत्वात्। इकारो लक्ष्मीवाचकः अकारो विष्णुवाचकः तथाच लक्ष्मीसहितः विष्णुरित्यर्थः । द्वितीयस्य यइत्यस्य यच्छब्दरूपत्वं । एवंच लक्ष्मीसहितः **यः** विष्णुः (वेदव्यासः) इति पदद्वयेन लभ्यते । **अशेषपुराणविद्यां** अशेषपुराणविद्याभिमानित्वेन तद्रूपां द्यां श्रियं भारतींच (वा)। **निर्ममे** उत्पादितवान् । कथंभूतां द्यां । **निर्ममेशे** ममतारहितानां ईशे । **आ** सम्यक् । **षपुराणविदि** षः प्राणः 'षकारःप्राण आत्मेति' श्रुतेः तस्य पुरं शरीरं अणयति प्रापयतीति षपुराणो हरिः तं वेत्तीति षपुराणवित् तस्मिन् शुके । **या उ** उच्चा उत्कृष्टा वर्तत इति शेषः तामिति । पुनःकथंभूतो विष्णुः । **मम** मे मदात्मकस्य शुकाविष्टस्य सूत्रात्मनो वायोः । **योनिः** जनकः । **आ** सम्यक् । **इशेषपुः** ईलक्ष्मीश्च शेषश्च तौ पुनातीति ईशेषपुः । इकार दीर्घलोपश्छान्दसः । यद्वा इः कामः शेषश्च क्रमात् रोमहर्षणपैलगतौ कामशेषौ पुनातीति इशेषपुरित्यर्थः । **अणवित्** वेत्तीति वित् नणयोरभेदेन न वित् अवित् स न भवतीत्यणवित् सर्वज्ञ इति यावत् । यद्वा आणवित् इतिपदं । तथात्वे आसमन्तात् णं बलात्मकं मुख्यप्राणं वेत्तीतिवा । णं प्रति अखिलं वेदयतीतिवा । **अनिः** इः कामः यस्मिन्नास्तीत्यनिः अकाम इत्यर्थः । **अशेषपुराणवित्** पुराणि शरीराणि अणंति प्राप्नुवंतीति पुराणाः जीवाः अशेषाः अस्य अकारवाच्यस्य विष्णोः शेषाः उपसर्जनीभूताः किंकरा इति यावत् समस्ता इतिवा तेचते पुराणाश्च अशेषपुराणाः तान् वेदयति उत्पादयतीति अशेषपुराणवित् विद्लृ उत्पत्ताविति धातोः । यद्वा अशेषपुराणेषु तिष्ठतीति सः विदसत्तायामिति धातोः । अथवा तान् वेत्तीति वित् विदज्ञानइति धातोः । **सः** विष्णुः एवं **मम** वेदैः वैदिकैराज्ञायि । अहं तदवताररूपं अं वेदव्यासं । **आ** सम्यक् मद्योग्यतानुसारेण । **यां** अयां शरणमितिशेषः । अलोपश्छान्दसः ॥७६॥

**मू० अनंतपारामित विक्रमेश प्रभो रमापारमनंतपार ।**

**महागुणाढ्यापरिमेयसत्त्व रमालयाशेषमहागुणाढ्य ॥७७॥**

(पद०) अनंतपार । अमितविक्रम । ईश । प्रभो । रमाप । अरं । अनंतप । अर । महागुणाढ्य । अपरिमेयसत्व । रमालय । अशेष मह । आगुणाढ्य ॥७७॥

वेदैर्ब्रह्मादिभिरपि साकल्येन भगवान् स्तोतुमशक्य इत्याशयेन सदा तं पश्यन् ( श्लोकद्वयेन ) सामान्यतः संबोधनेन स्तौति अनंतेति । अनंतपार अंतः कालतः परिच्छेदः उत्पत्तिनाशाविति यावत् पारः देशतः परिच्छेदः नविद्येते अन्तपारौ यस्य स तथोक्तः तस्य संबोधनं अनंतपारेति । अमितविक्रम असंख्येयाद्भुतानादिपराक्रम । ईश कर्तुमकर्तुमन्यथाकर्तुं समर्थ । प्रभो जगत्स्वामिन् । रमाप रमापालक । अरं रलयोरभेदात् अलं सम्यक् । अनन्तप शेषपालक । अथवा अन्तशून्यं यन्नित्यं वस्तु प्रकृत्यादि तत्पालक । अथवा अनन्त अन्तशून्य । प पालक । अर अल अलय अक्षीणेति यावत् । महागुणाढ्य महद्भिः गुणैः परिपूर्ण । गुणानां महत्त्वं नाम बलज्ञानपूर्णत्वं आधिक्यंच । अपरिमेयसत्व अत्र सत्वं नाम बलज्ञानसमुच्चयः अपरिमेयं अनंतं सत्वं यस्य स तथोक्तः तस्य संबोधनं । रमालय श्रीनिवास । अशेषमह अत्र महशब्दो नैजसर्वगुणोत्कर्षपरः अशेषेभ्यः रमादिभ्यः नैजसर्वगुणोत्कर्षवन्नित्यर्थः । अयं महशब्दोऽकारांतो ज्ञेयः । आगुणाढ्य आढ्याः श्रेष्ठाः ब्रह्मादयः आगुणाः सम्यगुपसर्जनीभूता यस्य स तथोक्तः तस्य संबोधनं आगुणाढ्येति विपरीतसमासोयं (स्तुतिमात्रपरत्वात् क्रियासंबंधाभावो न दोषापादकः । अनेन फलमनपेक्ष्य स्तोतृत्वमस्मत्स्वभावइत्याचार्यैस्सूचितं भवति) ॥७७॥

मू० भाभाभाभाभाभाभा भाभाभाभाभाभाभा ॥
भाभाभाभाभाभाभा भाभाभाभाभाभाभा ॥७८॥

एकाक्षरयमकरूपोयं श्लोकः) एवं सामान्यतो वेदाः भगवतोऽनंतगुणक्रियारूपाभिधायका इति प्रतिपाद्य इदानीं अशेषाणि वैदिक (वर्णानि) पदानि प्रत्येकं योगवृत्त्या प्रवर्तमानानि भगवतोऽनंतगुणतां विशेषादेव ज्ञापयंतीत्याशयेनोपलक्षणतया भकारस्य विष्णुवाचित्वं दर्शयति भेति ।

(अत्र सर्वत्र भ आ इति पदं विवक्षितं आसमन्ताद्भेति सर्वत्रान्वयः) भा दीप्तौ (पचाद्यच् आतोलोपइटिचेत्याकारलोपे भातीतिभः तस्य संबुद्धिः भा एवं सर्वत्र) दीपक ।१। भा ज्ञाने सर्वज्ञ ।२। भा आधारे भूम्याद्यखिलाधार ॥३॥ भा औदार्ये भक्ताभीष्टदाने उदार ॥४॥ भा संधाने अशेषधर्माणां सन्धानकर्तः ॥५॥ भा उपादाने प्रकृत्याद्युपादानत्व प्रद ॥६॥ भा निकटत्वे स्वकीयातिनिकट ॥७॥ भा सेव्यत्वे सुरादिसेव्य ॥८॥ भा ऊरी करणे सुरादीष्टांगीकरण ॥९॥ भा नयने अन्यान् नानाभावेन नेतः ।१०। भा नमने सज्जननम्य ॥११॥ भा वैलक्षण्ये समस्तविलक्षण ॥१२॥ भा आधिक्ये सर्वाधिक ॥१३॥ भा स्वातंत्र्ये सर्वदा स्वतंत्र ॥१४॥ भा आनंदे आनंदपूर्ण ॥१५॥ भा संततवादे अनवरतवचन ॥१६॥ भा पूज्यत्वे सर्वपूज्य ॥१७॥ भा विस्तारे मुक्तौ विस्तारकर्तः ॥१८॥ ( भा पूजने स्वयमेव स्वपूजक ) भा विनाशे कुमति विनाशक ॥१९॥ भा स्वामित्वे उत्तमस्वामिन् उभयस्वामिन् ॥२०॥ भा निश्चलत्वे शत्रुभिरप्रधृष्य(स्वमित्रे स्वामित्वे निश्चल) ॥२१॥ भा निखिलत्वे अखिलव्याप्त (भा उद्गाने भक्तैरुद्गेय ॥२२॥ भा संमोहने कुमतिसंमोहक ॥२३॥ भा संचारे निखिल हृदयसंचारिरूप (भा संपूर्तौ संपूर्ण ) ॥२४॥ भा विदारणे भक्तजनहृदय गनाज्ञानतमोविदारक (सर्वेशोहं मदन्य ईशोनास्तीति वदतो विदारक)२५ भा आलोचने ब्रह्मादिभिरपि इत्थमित्यालोच्य ॥२६॥ भा दर्शने अशेषजनकृतकर्मसाक्षिन् ॥२७॥ (भा कीर्तने सुजनसंकीर्त्य) भा सौन्दर्ये देवादिष्वतिसुंदर ॥२८॥ भा कथने ब्रह्मादिकथक ॥२९॥ भा स्मृतौ भक्त स्मृत ॥३०॥ भा श्रवणे भक्तश्रुत ॥३१॥ भा आह्लादने भक्ताह्लादकारक ॥३२॥ अत्र सर्वत्र प्लुतः आकारोऽतिशयार्थः । ( भा धातोरर्थबाहुल्याद्भकारोपादानम् ) ॥७८॥

मू० नैवपरः केशवतः परमादस्मात्समश्च सुकेशवतः ॥
सोऽयं शपथवरोनः शश्वत्संधारितः सुशपथवरोऽनः ॥७९॥

(पद०) न । एव । परः । केशवतः । परमात् । अस्मात् । समः ।

च । सुकेशवतः। सः। अयं। शपथवरः। नः। शश्वत्। संधारितः।
सुशपथवरः । अनः ॥७९॥

नैवेति । **सुकेशवतः** अत्र गकारस्थाने ककारः तृतीयोऽतिशयार्थः । तथाच सु शोभनाः गाः खगाः तेषामीशः सुपर्णः सुकेशः सोऽस्यास्तीति सुकेशवान् तस्मादित्यर्थः सुपर्णध्वजादिति यावत् । **परमात्** सर्वोत्तमात् । **अस्मात्** पूर्वोक्तात् । **केशवतः** कः ब्रह्मा ईशो रुद्रः तौ वर्तयतीति केशवः तस्माद्धरेस्सकाशात् । **परः** उत्तमः । **नैव** नास्त्येव । **समः** तुल्यश्च नैव । **सोऽयं** श्रुतियुक्तिभ्यां सिद्धोऽर्थः । **नः** अस्माभिः । **शपथवरः** तप्तपरशुधारणादिरूपः शपथः वरः बलं यस्य सतथोक्तः । शपथेनापि सिद्धइतियावत् । वबयोः रलयोश्चाभेदाद्बलमित्युपपन्नं । **शश्वत्** सर्वदा (अवतारेपीति यावत्)। **संधारितः** निश्चितः । कुतः यस्मात् । **अनः** मुख्यप्राणः । **सुशपथवरः** सु शोभनं शं सुखं यस्य स सुशः हरिः तस्य पंथाः मार्गः तस्मिन् वरः श्रेष्ठः मोक्षदातेति यावत् । अतस्तदवतारभूतैरस्माभिर्मोक्षप्रदश्रीहरिमार्गोपदेष्टृभिरेवं निश्चितमिति ज्ञातव्यम् ॥७९॥

मू० कृष्णकथेयं यमिता सुखतीर्थेनोदिताऽनेनयं यमिता ॥
भक्तिमता परमेशे सर्वोद्रेकात्सदानुवताऽऽप रमेशे ॥८०॥

(पद०) कृष्णकथा । इयं । यमिता । सुखतीर्थेन । उदिता । अनेने । यं । यं । इता । भक्तिमता । परमेशे । सर्वोद्रेकात् । सदा । नुवता । आप । रमेशे ॥८०॥

कृष्णकथेति । **अनेने** अनस्य मुख्यप्राणात्मकस्य स्वस्य इने नेतरि । **परमेशे** उत्तमस्वामिनि । **रमेशे** लक्ष्मीनाथे । **सर्वोद्रेकात्** सर्वोत्कर्षात् । **भक्तिमता** । **सदा** सर्वदा । **नुवता** नुः स्तोत्रं तन्नित्यमस्तीति नुवन् तेन नुवता स्तोत्रा । **सुखतीर्थेन** सुखकरं तीर्थं शास्त्रं यस्य तेन सुखकरशास्त्रकृता तन्नामकेन । **उदिता** कथिता । **यमिता** यमकमालिका (यमकात्मिका) ( यमकलक्षणंतु दण्डिकृतकाव्यादर्शोक्तं " अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः । यमकं " इति । अस्यार्थः प्रागुक्तानां वर्णानां

साहित्येन स्थानभेदेन वा पुनर्वचनं यमकमिति)। **इयं कृष्णकथा । यं । यं ।** अत्र एकस्य यच्छब्दस्य द्वितीयान्तत्वं । अपरस्तु ईकाराकारप्रकृतिकः । तथाच ईकारवाच्यया श्रियायुक्तो यः अः अकारवाच्यो विष्णुः तमिति तदर्थः । " अकयप्रविसंभूतसक (ख) हाविष्णुवाचका " इत्यभिधानात् । विष्णौ रूढोवा यशब्दः । सइत्यध्याहार्यः । तथाच यं विष्णुं इता प्राप्ता यत्प्रतिपादका सः विष्णुः मया आप प्राप्तः । (अथवा सविष्णुः न कंचित्प्राप किंतु अस्मान् आप प्राप । अस्मास्वेव विशेषसन्निधानकर्ता ) अथवा यं यमिति यच्छब्दद्वयं किं शब्दार्थकम् । तथाच इयं कृष्णकथा यं यं कंचित्कंचिदेवनरं इता प्राप्ता न सर्वनरमित्यर्थः । अतीवदुर्लभेति यावत् । अत्र या कृष्णकथा रमेशे विषये आप सा यं यमिति योज्यं ।८०।

**मू० इति नारायणनामा सुख (ऽवक) तीर्थसुपूजितः सुन (ना)रायणनामा। पूर्णगुणैरधिकपूर्णज्ञानेच्छाभक्तिभिः स्वधिकपूर्णः॥**

**(पद०) इति । नारायणनामा । सुखतीर्थसुपूजितः । सु नारायणना । मा । पूर्ण । गुणैः । अधिक । पूर्णज्ञानेच्छाभक्तिभिः । स्वधिकपूर्णः ॥८१॥**

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितं श्रीमद्यमकभारतं संपूर्णं ॥

**इतीति । हे गुणैः पूर्ण** आनंदादिगुणभरित । **हे अधिक** सर्वोत्तम । **नारायणनामा** नारायणनाम प्रतिपाद्यः । **सु(न)रायणना** सु(न) राणां रमाजशंकरादीनां अयनं आधारः सचासौ ना परमपुरुषश्च सतथोक्तः **स्वधिकपूर्णः** सुष्ठु अधिकाः ब्रह्मादयः तेषु पूर्णः सन्निहितः । (त्वं) **इति** उक्तप्रकारेण । **पूर्णज्ञानेच्छाभक्तिभिः । सुखतीर्थसुपूजितः** सुखतीर्थ नामकेन मया सुष्ठु पूजितस्सन् । **मा** मां । **अत्र** रक्षेति (श्लो. ७९) पूर्वेणान्वयः । (द्वितीयपादे सुनारायणनामेति पाठे प्रथमपादे नारायण ना मा इति च्छेदः । हे नारायण दोषविरुद्धगुणाश्रय हरे । सुनारायणनामा सु समीचीनं अर्थाव्यभिचारि नारायणेति नाम यस्य सः । **ना** परमपुरुषः त्वं मा मवेत्यर्थः । ) ( सुखतीर्थपूजित इत्यत्र अवकतीर्थपूजितइति पाठे अव ।

कतीर्थपूजितइति च्छेदः कं सुखं केन काय वा तीर्थं यस्य स कतीर्थः तेन मया पूजितस्सन् ज्ञानेच्छाभक्तिभिर्विशिष्टं मामवेत्यर्थः ) ॥८१॥

सुरशिखामणिमध्वविनिर्मितं यमकभारतमेतदशेषतः ।
विवरितुं नहि शक्यमथापि तत्करुणया कृतिरीषदियं मया ॥
व्यासं सर्वगुणावासं वासवीनंदनं प्रभुं ।
श्रीनिवासं सदा वन्दे भासमानं हृदम्बरे ॥
इति श्रीवेदेशतीर्थपूज्यपादशिष्येण यदुपतिना विरचिता
श्रीमद्यमकभारतटीका समाप्ता ॥ शुभं भूयात् ॥

---

**एतद्ग्रन्थस्य मुद्रणे आदर्शदानेनोपकर्तारः—**

---

१. श्रीमन्मध्वविलासपुस्तकशालाधिपतयः,
श्रीमन्मध्वशास्त्रप्रवक्तारः, पण्डिताः, T. R. कृष्णाचार्याः ।
२. श्रीमन्माध्वमित्रपत्राधिपाः, श्रीम० भागवत रङ्गनाथाचार्याः ।
३. श्रीम० देवळे, शेषाचार्याः ।

---